श्री आनन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

सम्पादकः

विद्वान् सत्यध्यानाचार्यकट्टी

प्रकाशकाः

द्वैतवेदान्ताध्ययन संशोधनप्रतिष्ठानम्,

बेंगलूरु-४

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

श्रीपद्मनाभतीर्थविरचितटीका श्रीजयतीर्थविरचितटीका
श्री व्यासतीर्थविरचितमन्दारमञ्जरी
श्रीनिवासतीर्थविरचितदुर्गमार्थव्याख्या श्रीसत्यनाथतीर्थ
विरचितपरशुः इति व्याख्यानपञ्चकसहितम् ।

सम्पादकः
**विद्वान् सत्यध्यानाचार्यकट्टी**

२००१




प्रकाशकाः
**द्वैतवेदान्ताध्ययनसंशोधनप्रतिष्ठानम्, बेंगलूरु-४.**

**Upādhikhandanam** of Śrī Ānandatīrtha with the commentaries of Śrī Padmanābhatīrtha and Ṣrī Jayatīrtha and Sub-commentaries of Śrī Vyāsarāja Śrīnivāsa tīrtha and Śrī Satyanātha tīrtha. Edited by Vidwan Satyadhyānachārya Katti, published by Dvaita Vedānta Studies and Research Foundation, No.11, Uttaradimatha Road, Uttaradhimath Compound, Bangalore-560 004.



First Edition : 2001

No. of Pages : xvi + 182

Price : Rs.80/-

No. of Copies : 1000

Printed by : Vāgartha, No.149, 8th Cross, N.R. Colony, Bangalore-19.

# Preface

Upādhikhandana is the third text in the group of three texts collectively known as Khandanatraya. The other two texts viz. Māyāvādakhandana and Mithyātvānumānakhandana are already published by Dvaita Vedanta Foundation. This text examines the concept of Upādhi envisaged in Advaita to account for the difference between Brahman and jīvas at Vyāvahārika level. This small text has commentaries by Śrī Padmanābhatīrtha and Śrī Jayatīrtha. On the commentary of Śrī Jayatīrtha there are sub-commentaries of Śrī Vyāsarāja, Śrī Śrīnivāsatīrtha and Śrī Satyanātha tīrtha. All these are included in this volume.

Vidwan Satyadhyānachārya Katti has edited all these works with the help of the manuscripts procured by Dvaita Vedanta Foundation. He has added a detailed introduction in Sanskrit. Prof. Pandurangi has given a summary of the points made in this text in English to help the modern scholars of Vedanta. We thank both these scholars for their co-operation.

We thank M/s. Vāgartha for printing this volume neatly and in good time.

**N. Narasimha Rau**
Chairman
Dvaita Vedanta Foundation

# प्रस्तावना

मन्महे सुविदितमेव सकलसद्वैष्णवानां यत् संसारसागरादस्मात्सज्जनानुद्धिधीर्षवः श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणगुरुतमाः त्रैलोक्याचार्याः श्रीमदानन्दतीर्थाः सप्तत्रिंशत् ग्रन्थरत्नान् चक्रुरिति । तेष्वन्यतमोऽयं उपाधिखण्डनाख्यप्रकरणस्फुलिङ्गोऽलंतनुरपि विपक्षकक्षं क्षित्वा अगण्यगुणनित्यैकनिलयाकृतिं अशेषदोषदूरं नारायणं प्रकाशयति ।

वेदतन्मीमांसाशास्त्रैर्जीवो परमात्मनः अत्यन्तभिन्नत्वेन प्रतिपाद्यत इति निश्चप्रचम् । स च जीवः स्वतश्चिदानन्दात्मकः । एवं स्थितेऽपि अनाद्यविद्याकामकर्मनिमित्ततया दुःखाद्यनर्थो जीवस्य । अनर्थपरिहारस्तु परमात्मनः प्रसादादेव । स च प्रसादो वेदतन्मीमांसाद्वारा परोक्षज्ञानं सम्पाद्य परस्य साक्षात्करणेन विना न सम्भवतीति सकलगुणाकरतया निःशेषदोषगन्धविधुरतया च परमात्मानं प्रतिपादयितुं अशेषाम्नाया प्रवर्तन्त इति हि सिद्धान्तः । अतोऽस्मन्मते परब्रह्म विषयः । मुमुक्षुरधिकारी । आत्यन्तिकदुःखविशिष्टपरमानन्दाविर्भावरूपमोक्ष एव प्रयोजनम् । परं मायिमते विपरीतं मन्यते । तन्मते हि जीवात्मा परब्रह्मस्वरूपः । जीवस्य दुःखादिरूपानर्थोऽज्ञानादिनिमित्तकः । अपरमार्थोयमनर्थोऽद्वैतज्ञानेनैव निबर्हणीय इत्यतो जीवब्रह्मैक्यप्रतिपादनाय सर्वे वेदान्ता आरभ्यन्ते । अतो वेदान्तानां आत्मैक्यं विषयः । अज्ञाननिवृत्तिः प्रयोजनम् । अज्ञानी एवाधिकारी भवति ।

तन्मतम् अनुबन्धचतुष्टयाभावसमर्थनद्वारा निराकृत्य स्वमतस्थापनायेदं प्रकरणं श्रीमदानन्दतीर्थमुनिना व्यरचि ।

उपाधिर्नाम अन्तःकरणादिः । तथा च उपाधेः अन्तःकरणादेः जीवब्रह्मभेदनिमित्तत्वस्य खण्डनं निराकरणं यस्मिन्प्रकरणे तदुपाधिखण्डनं इत्यन्वर्थकं ग्रन्थनाम । प्रकरणस्यास्य तत्त्वप्रकाशिका इत्यपरं नामधेयम् । श्रुतितन्मीमांसाप्रतिपाद्यभूतं यत् परमपरं च तत्त्वं तत्प्रकाशयतीति तत्त्वप्रकाशिका तन्नामकं प्रकरणमित्यर्थः ।

प्रकरणेऽस्मिन्मुख्यतोऽज्ञानाभाव एव समर्थ्यते । अज्ञानाश्रयस्यान्यस्य परेणानङ्गीकारात् परमात्मनश्च सर्वज्ञत्वेन अज्ञानाश्रयत्वासम्भवात् अज्ञानस्य च अस्यास्मिन्नज्ञानमिति प्रतीतेः कस्यचित् क्वाचित्कत्वनियमात् अत्र च तदभावात् परमत अज्ञानं नोपपद्यते ।

उपाधिनिमित्तभेदात् अज्ञानमुपपद्यते इति वाचस्पतिपक्षः । तन्मते अज्ञानस्य जीवाश्रयत्वमभ्युपगम्यते । जीवब्रह्मणोः स्वभावतः ऐक्येऽपि यथा सत्यपि बिम्बप्रतिबिम्बयोरैक्ये दर्पणाद्युपाधिनिमित्तभेदाद्बिम्ब-स्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामता घटते एवं अन्तःकरणाद्युपाधि-निमित्तभेदसद्भावेन ब्रह्मणः सत्यत्वेऽपि जीवस्य अज्ञता घटते एव इत्यङ्गीक्रियते । तन्न । तस्य अपसिद्धान्तानवस्थित्यन्योन्याश्रयचक्रकापत्ति-मुखदोषदूषितत्वात् ।

भास्करमतमपि अस्मद्दूषणशृङ्खलां नोल्लङ्घयितुं क्षमम् । तत्र एकमेव ब्रह्म अन्तःकरणाद्यनन्तोपाध्यवच्छेदादनन्तजीवभावमापद्यत इत्यङ्गीकारेऽपि भेदस्य उपाधीनां च मिथ्यात्वं नाङ्गीक्रियते । भेदसत्यत्वाङ्गीकारेऽपि स्वाभाविकभेदानङ्गीकारेण अद्वैतभङ्गोऽपि नास्ति तन्मते । उपाधेरज्ञान-कल्पितत्वाभावेन अनवस्थादिदूषणमपि न तान् स्पृशति । अतो ब्रह्मजीवसम्बन्धिनी सर्वज्ञत्वाज्ञत्वे न विरोधिनी इति मन्यन्ते । तदयुक्तम् । उपाधितो भेदो भवतीत्यनङ्गीकारात् । उपाधिः भेदस्य ज्ञापक एव नतु कारकः । अयं च महारजनाद्युपाधेः विद्यमानस्यैव पटाद्यवयवभेदस्य

There is a possibility of endless partitions.



ज्ञापकत्वेनैव दर्शनं न तु प्रागविद्यमानस्य कारकत्वेन इत्यनेन विज्ञायते । अत्रेयं शङ्का भवति – आकाशे तावद्भेदो नास्ति । तथाऽपि घटमठाद्युपाधिभिर्घटाकाशमठाकाशरूपप्रदेशभेदो पूर्वमविद्यमानः क्रियमाणो दृश्यत एवेति चेन्न आकाशेऽपि स उपाधिः विद्यमानस्य आकाशभेदस्यैव ज्ञापको नत्वविद्यमानस्य कारकः भेदस्य वस्तुस्वरूपत्वेन स्वरूपदर्शने उपयोगाभावेऽपि तद्विशेषत्वेनैवाङ्गीकारात् मूढबुद्धिव्यपेक्षया उपाधेः भेदज्ञापकत्वमुपपद्यत एव । अन्यथा अविद्यमानस्यैव भेदस्योपाधिर्कारक इत्यङ्गीकारे प्रष्टव्यं किं घटाद्युपाधिराकाशसम्बन्धी तद्भेदं करोत्युतासम्बद्ध इति । असंम्बद्धस्योपाधेर्भेदकत्वे काश्मीरस्थेन महारजनेन केरलवर्तिनो वाससो भेदकत्वं स्यादित्यतिप्रसङ्गात् सम्बद्ध एव घटमठादिरूपोपाधिर्भेदक इति वाच्यम् । तथा च यदि घटरूपोपाधिः आकाशभेदजनकः तर्हि घटाकाशयोः संयोगो वाच्यः । संयोगस्य च द्विष्ठत्वेन आकाशनिष्ठो यो घटाकाशसंयोगः स आकाशे व्याप्यवृत्तिः अव्याप्यवृत्तिर्वा इति प्रष्ठव्यम् । व्याप्यवृत्तिश्चेत् सर्वस्याप्याकाशस्य घटाकाशत्वात् स उपाधिराकाशभेदहेतुरेव न स्यात् । ततो संयोगः अव्याप्यवृत्तिरित्यङ्गीकार्यम् । एवं च उपाधिसम्बन्धात्प्रागेव आकाशैकदेशस्याङ्गीकारप्रसङ्गः । तस्याप्येकदेशस्यौपाधिकत्वमुच्यते चेत् सोप्युपाधिरुपाध्यंतरकृतैकदेशे सम्बन्ध्य भेदक इत्यनवस्था । तथा च स्वाभाविक एव भेदोऽङ्गीकार्य इति स्वाभाविकत्वेन उपधिसम्बन्धात्प्रागेव सिद्धस्याकाशभेदस्योपाधिना कर्तुमशक्यत्वादुपाधिर्विद्यमानस्यैव ज्ञापको विज्ञायते ।

अत्र परवादी शङ्कते स्वात्यन्ताभावसमानाधिकरणत्वं अव्याप्यवृत्तित्वमिति पक्षः आश्रियते एवं च स्वात्यन्ताभावाधिकरणे एव घटस्य वृत्तित्वाङ्गीकारात् उपाध्यन्तरानपेक्ष्यत्वेन नानवस्था । ननु स्वात्यन्ताभावाधिकरणे स्वस्य वृत्तित्वं विरुद्धमिति चेन्न । इह पक्षी नेह पक्षीति

पक्षितदत्यन्ताभावयोः प्रतीतत्वान्न विरोध इति । तदयुक्तम् । भूताकाशांशानामन्योन्यभेदवादिनो मम अंशभेदेन वैय्यधिकरण्येनैव संयोगतदत्यन्ताभावयोः निर्वाहात् ऐकाधिकरण्यज्ञापकं इह पक्षी इति प्रतीतेः किञ्चिदस्तीति विषमो दृष्टान्तः । अत आकाशादिभेदः स्वाभाविक एव एष्टव्यः । आकाशभेदस्य कथञ्चिदौपाधिकत्वाङ्गीकारेऽपि जीव-ब्रह्मणोर्जीवानां च भेदः स्वाभाविक एवाङ्गीकार्यः ।

यदि जीवब्रह्मणी जीवाश्च स्वभावतोऽभिन्नाः स्युः तदा अन्योन्य-गतसुखदुःखाद्यनुभववन्तः स्युः यथा सम्प्रतिपन्नम् । विमताः परस्परैक्य-रहिताः चेतनत्वे सति अन्योन्यगतुसुखदुःखाद्यनुसंधानशून्यत्वात् । यो येनैक्यवान् चेतनः स तत्सुखाद्यनुसंधानवान् यथा सम्प्रतिपन्नं इत्यनुमान-तर्कप्रोद्बलेन पक्षस्यास्य जङ्घालात् । परवादी अस्य तर्कस्य उपाधिभेदा-भावस्य उपाधित्वमाशङ्कते । तन्न युज्यते । तथा हि अनुसंधानं प्रति उपाधिभेदाभावो न प्रयोजकः अपि तु स्वरूपैक्यमेव । अन्यथा उपाधिभेदात् हस्तपादादिगत सुखादिभोगानुसन्धानं एकस्य न स्यात् । अत उपाधिभेदेऽपि हस्तपादगतसुखादिभोगवत् यदि स्वरूपैक्यं स्यात् तर्हि देवदत्तयज्ञदत्तादिसर्वोपाधिगतोऽसौ सुखादिभोगानुसंधानं भेदेन न दृश्येत । दृश्यते च । अतो न स्वरूपैक्यं जीवब्रह्मणोः ।

संश्लिष्टोपाधित्वमनुसन्धाने प्रयोजकम् । तदभावात्प्रकृते नानुसन्धानं इति पक्षोप्ययुक्तः । तत्र प्रष्टव्यं किं उपाधिसंश्लेषमात्रं प्रयोजकमुत स्वरूपैक्ये सत्युपाधिसश्लेषः । आद्ये मातृसुखादेः गर्भस्थेनानु-सन्धानप्रसङ्गः । तत्रापि प्रयोजकस्य संश्लेषस्य सद्भावात् । नाऽपि द्वितीयः । स्वरूपैक्यस्यैव प्रयोजकत्वे विशेषणप्रक्षेपे मानाभावात् । अपि च स्वरूपैक्यसद्भावाद्विश्लिष्टनानादेहगतसुखाद्यनुसन्धानं सौभर्यादियोगिनः दृष्टमिति तदेवानुसन्धाने प्रयोजकं नोपाधिसंश्लेष इति ज्ञायते । अन्यथा

योगप्रभावोत्पादितानेकशरीरगतसुखाद्यनुसन्धानं योगिनो न स्यात् । अतो योगिनः स्वरूपैक्यात् उपाधिषु विश्लिष्टेष्वपि यथा नानादेहगतसुखादि-भोगानु सन्धानं तथा प्रकृतेऽपि इति स्वरूपैक्यस्यैव प्रयोजकत्वं स्थितम् ।

एवं अध्यस्तोपाधिनिमित्ताध्यस्तभेदमङ्गीकुर्वतां वाचस्पत्यादीनां पक्षं सत्योपाधिकृतसत्यभेदमभ्युपगच्छतः भास्करस्य मतं च निराकृतं भगवत्पादैरस्मिन्प्रकरणे ।

किञ्च जीवपरमात्मनोर्जीवानां च यो भेदः स स्वभावतः एव न मिथ्या सत्योपाधिनिमित्तः इति पक्षस्य दोषविधुरत्वेन प्रामाणिकत्वेन च तथा उभयविधाद्वैतसिद्धान्तस्य प्रत्यक्षविरुद्धत्वेन अप्रामाणिकत्वाच्च परपक्षः अञ्जसा दूषितः ।

तदनु स्वपक्षसाधनार्थं भेदसाधकाभेदबाधकव्युत्पादनं क्रियते । परशरीरं सात्मकं चेष्टावत्त्वात् इत्यनुमानेन परशरीरस्य सात्मकत्वे सिद्धे परशरीराधिष्ठातुः स्वात्मनः अन्यत्वं प्रत्यक्षेणैव सिद्ध्यति । न च सन्दिग्धासिद्धिः । परशरीरं हिताहितप्राप्तिपरिहारेच्छापूर्वव्यापारवद्भवितु-मर्हति परिस्पन्दापरपर्यायचेष्टाविशेषवत्त्वात् मच्छरीरवदित्यनुमानेन साधनान्न संदिग्धासिद्धिः । अनुमानेनापि जीवभेदः सिद्ध्यति । देव-दत्तात्मा यज्ञदत्तादीतरात्मभ्यो भिन्न हिताहितप्राप्तिपरिहारात्मकचेष्टा-रूपप्रयत्नविशेषवत्त्वतदभावरूपविरुद्धधर्माधिकरणत्वात् । यत् यद्विरुद्ध-धर्माधिकरणं तत्ततो भिन्नम् । यथा शीतस्पर्शाधिकरणं जलं उष्ण-स्पर्शाधिकरणादनलात् इत्यनुमानेन जीवभेदसिद्धिः ।

जीवेश्वरभेदोऽपि प्रत्यक्ष एव । जीवनिष्ठतया सर्वानुभवसिद्धाः अज्ञ-त्वाल्पशक्तित्वदुःखित्वस्वल्पकर्तृत्वादिधर्माः सर्वज्ञत्वादिईशनिष्ठधर्मविरुद्ध-धर्मा एवेति ईशधर्मविरुद्धधर्मवन्तमात्मानं प्रत्यक्षतः पश्यन् ततो अन्यत्वं न

पश्यतीति सिद्धस्तावत्प्रत्यक्षेणैव ईश्वरभेदः । जीवः ईश्वराद्भिन्नो भवितुमर्हति ईश्वरीयधर्मविरुद्धधर्माधिकरणत्वात् यद्यद्विरुद्धधर्माधिकरणं तत्ततो भिन्नं यथा जलानलमित्यनुमानेनापि ईश्वरभेदस्तावत्सिद्धः ।

ननु स्यादेवं प्रत्यक्षेण ईश्वरभेदसिद्धिर्यदि सार्वज्ञ्यादिगुणवत्तया ईश्वरः सिद्धः स्यात् । न चैवमतो न प्रत्यक्षतः ईश्वरभेदसिद्धिरिति पक्षः सार्वज्ञ्योपपादिकाभिः ''परास्यशक्तिर्विविधैवश्रूयते'' ''यः सर्वज्ञ स सर्ववित्'' ''य आत्माऽपहतपाप्मा'' ''स हि सर्वस्य कर्ता'' इत्यदि-श्रुतिभिः सर्वज्ञत्वादिगुणानां सत्यत्वप्रतिपादनात् । ''यः सर्वज्ञः इत्यादि-श्रुतयः सार्वज्ञ्यादिकमेव प्रतिपादयन्ति न पुनस्तस्य सत्यतां इति शङ्कानवकाशः । नेहनानास्ति किञ्चन इति श्रुतेः ''इह ब्रह्मणि नाना भिन्नं किञ्चन गुणकर्मादिकं नास्ति'' इत्येव निषेधेन ''इह ब्रह्मणि किञ्चन गुणकर्मादिकं नानाभूतः प्रपञ्चश्च नास्ति'' इति श्रुत्यर्थमुक्त्वा व्यावहारिकसार्वज्ञ्यादिविषयाः यः सर्वज्ञ इत्यादि श्रुतय इति प्रतिपादने मानाभावोपपादनेन निरस्तम् । धर्मिग्राहकप्रमाणविरोधात्, विमतो विशिष्टाकारो मिथ्या विशिष्टाकारत्वात् नीलं नभ इति विशिष्टाकारवदि-त्याद्यनुमानेन सर्वज्ञत्वादिधर्माणां मिथ्यात्वप्रतिपादनमपि निरस्तम् ।

ततश्च सर्वज्ञस्य ईश्वरस्य सिद्धत्वात् प्रत्यक्षेणैव तद्भेदस्य सिद्धेः भेदः स्वाभाविक एव न तु अज्ञानकल्पितः । तथा च अज्ञानस्यैव अद्वैतमते असंभवात् विषयादिसिद्धेश्च अज्ञानसिद्ध्यधीनत्वात् न परमते विषयादि-कमुपपद्यते । तथा च अद्वैतमते विषयप्रयोजनादिरूपानुबन्धचतुष्टयस्या-भावात् शास्त्रस्य अनारम्भणीयत्वमेव सिद्धम् । एवं जीवब्रह्मणोः स्वाभाविकभेदमङ्गीकृत्य अनाद्यविद्याकामकर्मनिमित्ततया दुःखाद्यनर्थ-परिहारकपरमात्मप्रसादजनकसाक्षात्कारजनकपरोक्षज्ञानकारणत्वेन शास्त्र-स्यारम्भणीयत्वं समर्थ्य अशेषाम्नायाः सकलगुणाकरतया निःशेषदोषगन्ध-

विधुरतया च परमात्मानं प्रतिपादयन्ति इति जन्मादिसूत्रोक्तज्ञेयत्व-गम्यत्वाख्यगुणमालया विष्णुरलङ्कृतोऽस्मिन् प्रकरणे ।

भावगम्भीरतया ज्ञातुमशक्यं एतत्प्रकरणं मन्दानामवबोधाय वादिमत्तेभकण्ठीरवैः जयतीर्थश्रीमच्चरणैः व्याख्यातमपि तद्व्याख्यानस्य मन्दानां दुरवबोधात् टीकागाम्भीर्यमुद्धर्तुं क्षमाः व्यासतीर्थाः मन्दारमञ्जरीं, श्रीनिवासतीर्थाः स्वव्याख्यां सत्यनाथश्रीमच्चरणाः परशुवाख्यां व्याख्यां च विरचयामासुः ।

टिप्पणीत्रयोपेतटीकासहितम् उपाधिखण्डनाख्यं प्रकरणमधुना द्वैत-वेदान्ताध्ययनसंशोधनप्रतिष्ठानाख्यसंस्थया मुद्राप्य प्रकाशितम् । एतादृशा-पूर्वटिप्पणीग्रन्थाध्ययनाध्यापनादिना सर्वे कृतार्था भवेयुरित्याशास्महे ।

**-सत्यध्यानाचार्यकट्टि**

**॥ श्रीकृष्णार्पणमस्तु ॥**

# Introduction

The central doctrine of Advaita is ātmaikya i.e. brahman alone is ultimade reality. However, we are in the midest of a manifold empirical world. The emergence of this manifold world and the jīva has to be explained. How this one brahman is developed into many and what is the status of these has to be explained. Three important concepts viz ajñāna, mithyātva and upādhi are developed in advaita. It is ajñāna i.e. avidyā that projects the world over brahman. It bifurcates the jīvas and jagat by playing the role of an upādhi i.e. an adjunct or a conditioning factor. The status of the jīva and jagat brought about by ajñāna i.e. avidyā, is mithyā i.e. neither real nor totally unreal. In this way these three concepts explain emergence and the status of the manifold empirical world.

Dvaita rejects these three concepts and rejects the theory of ātmaikya and the mithyātva of the jīva and jagat.

Śrī Madhvāchārya has composed three small treatises viz. (i) Māyāvāda Khandana, (ii) Mithyātvānumāna Khandana (iii) Upādhikhandana to reject these three concepts of advaita. He has rejected these concepts in detail in his major works. Here, he has put the main drawbacks of these concepts in a nutshell.

In Māyāvādakhandana the concept of ajñāna is rejected. In Mithyātvānumānakhandana the concept of mithyātva is rejected. In the present work viz upādhikandana, it is clearly pointed out that the so called ajñāna cannot play the role of upādhi i.e. an adjunct or conditionning factor for brahman and manage the bifurcation of brahman into jīvas and jagat. The ajñāna playing the role of upādhi is rejected on the following grounds.

1) Ajñāna has no āśraya i.e. locus, nor viṣaya the object to operate upon.

According to advaita there is no second object than brahman. Brahman is sarvajña. Therefore he cannot be the locus or the object to be affected by ajñāna.

2) It cannot be argued that Jīva is the locus of ajñāna. Though brahman and jīva are identical, they are considered as different during samsāra due to the upādhi of ajñāna. The very idea of upādhi is untenable.

3) The question whether the so called ajñāna plays the role of upādhi in a real way or plays it illusorily? If it plays the role of upādhi in a real way and really bifurcates brahman into jīva and jagat, then, advaita position is given up.

स स्वभावतः अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ।

4) In case it plays its role illusorily, it results in inter-dependence. Jīva will have ajñāna only when he is bifurcated by ajñāna and ajñāna can play its role only when it is located in jīva.

सति खलु उपाधौ तद्भिन्नस्य जीवस्य अज्ञानं स्यात् । उपाधिश्च अज्ञाने सति स्यात्, अज्ञानं च उपाधौ सतीति ।

Incidently, the concept of upādhi adopted by Bhāskara is also rejected.

1) According to Bhāskara antaḥkaraṇa is upādhi. It is real. Brāhman is bifurcated into many jīvas by the upādhi of antaḥkaraṇa. There are as many antaḥkaraṇas as there are jīvas. The difference brought about by antaḥkaraṇas is also real. However, it is not natural.

i) एकमेव ब्रह्म अन्तःकरणाद्यनन्तोपाध्यवच्छेदात् अनन्तजीवभाव-मापद्यते ।

ii) भेदस्य उपाधीनां च अस्माभिः मिथ्यात्वानङ्गीकारात् ।

iii) भेदसत्यत्वाङ्गीकारेपि स्वाभाविकभेदानङ्गीकारेण अद्वैतवादाविरोधात् ।

The above claim of Bhāskara is rejected on the following grounds.

1) An adjunct does not cause the difference but only indicates it. When a part of a cloth is coloured, the adjunct colour only indicates the difference between the coloured and uncoloured parts but does not create the parts. Even in the case of ākāśa within a jār etc. the difference between the ākāśa in the jāra and outside is not caused. It is only indicated.

i) न च महारजनादिः परस्यैव भेदकः । द्वौ पटौ इत्यप्रतीतेः ।

ii) खेऽपि प्रागेव विद्यमानस्य देशविशेषस्य ज्ञापकः एव उपाधिः अङ्गीक्रियते न तु भेदस्य कारकः ।

2) If the upādhi has to cause the difference, then the question arises whether it differentiates by actually contacting the object concerned or without contacting? The second alternative is not feasible. In the first alternative whether its contact is with a part of the object or the whole of it. If it is with a part, then, to cause that part another upādhi will be required. Similar question will arise in respect of that upādhi also this will lead to infinit regress.

3) In view of the above, it is not possible to work out 'the difference between Īśvara and Jīva by utilising the concept of upādhi. It has to be accepted as natural and real. Otherwise it would be difficult to account for the difference in the experiences of joy and sorrow.

जीवब्रह्मणोः जीवानां च भेदस्तु स्वाभाविक एव अङ्गीकार्यः । स्वरूपैक्ये स्वाभाविकैक्ये सुखदुःखादिभोगस्य भेदेन दर्शनं न स्यात् ।

After refuting the views of those who tried to manage the difference between brahman and jīva by utilising the concepts of मिथ्योपाधि and सत्योपाधि the author establishes the जीवेश्वरभेद by प्रत्यक्ष, अनुमान and श्रुति.

So far as one's own self is concerned it is साक्षिप्रत्यक्षसिद्ध. The self of others could be ascertained by their activity. This enables to comprehend the difference between the two. The difference between Īśvara and Jīva also is comprehended by pratyakṣa by the realisation of one's own limited nature and greatness of God conveyed by śruti. The limited nature of oneself is cognised by perception. The śruti 'यः सर्वज्ञः स सर्ववित्' etc declare the greatness of Īśvara. The śruti 'नेह नानास्ति किञ्चन' does not deny the world. It denies the difference between the God and his attributes.

Since, the very concept of ajñāna i.e. avidyā, is rejected above, the advaita scheme of eligibility, subject matter, the goal and the relation among these becomes irrelevant and he cannot proceed to explore the scripture.

From the above analysis it is clear that the three concepts viz. (i) ajñāna (ii) mithyātva (iii) upādhi cannot stand logical scrutiny.

Mahāmahopādhyāya

**Prof. K.T. Pandurangi**

Hon. Director of Dvaita Vedānta Foundation

# उपाधिखण्डनस्य विषयानुक्रमणिका

श्री आनन्दतीर्थभगवत्पादाचार्यविरचितम्

# उपाधिखण्डनम्

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमलालयः ॥ १ ॥
अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ।
उपाधिभेदाद् घटत इति चेत् स स्वभावतः ।
अज्ञानतो वा द्वैतस्य सत्यता स्वत एव चेत् ॥ २ ॥
अनवस्थितिरज्ञानहेतौ वाऽन्योन्यसिद्धिता ।
चक्रकापत्तिरथवा भेदश्चोपाधितः कुतः ॥ ३ ॥
विद्यमानस्य भेदस्य ज्ञापको नैव कारकः ।
उपाधिर्दृष्टपूर्वो हि खेऽपि देशान्तरस्य सः ।
ज्ञापको विद्यमानस्य मूढबुद्धिव्यपेक्षया ॥ ४ ॥
न चेदुपाधिसम्बन्ध एकदेशोऽथ सर्वगः ।
एकदेशोऽनवस्था स्यात् सर्वगश्चेन्न भेदकः ॥ ५ ॥
सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः ।
दृश्यो ह्युपाधिभेदेऽपि हस्तपादादिगो यथा ॥ ६ ॥
नानादेहगभोगानुसन्धानं योगिनो यथा ।
न चेद् भोगानुसन्धानं तदिच्छा योगिनः कुतः ॥ ७ ॥
अनुसन्धानरहितदेहबाहुल्यमन्यथा ।
सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ॥ ८ ॥
सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ।
तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ॥ ९ ॥
आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः ।
प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ॥ १० ॥

चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते ।
अन्यत्वं स्वात्मनस्तस्मात् सर्वैरेवानुभूयते ॥ ११ ॥
अज्ञता चाल्पशक्तित्वं दुःखित्वं स्वल्पकर्तृता ।
सर्वज्ञतादीशगुणविरुद्धा ह्यनुभूतिगाः ॥ १२ ॥
सार्वज्ञादिगुणा विष्णोः श्रुतिषु प्रतिपादिताः ।
''सत्यः सो अस्य महिमे''त्यादिवाक्यान्मृषा न च ॥ १३ ॥
न च वेदोक्तमिथ्यात्वे मानं तन्मानताऽपि न ।
अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनाम् ॥ १४ ॥
अतो नाज्ञातमिति च विषयो विषयान्तरे ।
अज्ञाभावात् फलं कस्य योगः शशनृभृङ्ग्योः ॥ १५ ॥
दुर्घटत्वं भूषणं चेत् स्यादविद्यात्वमात्मनः ।
अन्धन्तमोऽप्यलङ्कारो नित्यदुःखं शिरोमणिः ॥ १६ ॥
अतः ''परो मात्रये''ति पूर्वश्रुतिनिदर्शितः ।
''अन्यमीशमि''ति श्रुत्या भिन्नजीवदृशं गतः ।
भिन्नत्वेनात्मसादृश्यदो ''यदे''ति श्रुतेः सदा ॥ १७ ॥
मायावादतमोव्याप्तमिति तत्वदृशा जगत् ।
भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेः सदा ॥ १८ ॥
नमोऽमन्दनिजानन्दसान्द्रसुन्दरमूर्तये ।
इन्दिरापतये नित्यानन्दभोजनदायिने ॥ १९ ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं उपाधिखण्डनं संपूर्णम् ॥

श्रीपद्मनाभतीर्थभट्टारकविरचिता

# उपाधिखण्डनटीका

॥ ॐ श्री वेदव्यासाय नमः ॐ ॥ हरिः ॐ ॥ अमानवशादीशस्य संसारित्वमिति यन्मायिमतं तत्पूर्वश्लोकोक्ताशेषदोषोज्झितत्वसिध्यर्थं निराकरोति ॥ अज्ञताऽखिलसंवेत्तुरित्यादिना ॥ सर्वज्ञत्वादिलक्षणमीश्वरत्वमसर्वज्ञत्वादिलक्षणं संसारित्वमेकस्यैवोपाधिवशाद्युज्यत इति न वाच्यम् । उपाधेर्निरूपयितुमशक्यत्वात् । तथा हि– जीवेश्वरभेदोपपादकोपाधिरनध्यस्तो वा स्यादज्ञानकल्पितो वा । अनध्यस्तश्चेदद्वैतभङ्गस्स्यात् । आत्मातिरेकेणोपाधेस्सत्यत्वाङ्गीकारात् । अज्ञानहेतुकश्चेदुपाधिरनवस्था स्यादन्योन्याश्रयत्वं वा स्याच्चक्रकापत्तिर्वा स्यात् । अज्ञानस्याऽस्वतस्सिद्धत्वात् । तथा हि । यदज्ञानमुपाधिकल्पितं तदप्यज्ञानान्तरकल्पितम् । तदप्यज्ञानमज्ञानान्तरकल्पितमित्यनवस्था । अज्ञानसिद्धावज्ञानकल्पितजीवसिद्धिर्जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरित्यन्योन्याश्रयत्वम् । अज्ञानसिद्धावध्यस्तोपाधिसिद्धिरुपाधिसिद्धावुपाध्युपहितजीवसिद्धिर्जीवसिद्धौ तदाश्रयाज्ञानसिद्धिरिति चक्रकम् । अज्ञानस्य स्वतस्सिद्धौ ब्रह्मवदनिवृत्तिस्स्यात् । स्वतस्सिद्धस्य मायिनाऽनिवृत्यङ्गीकारादित्यर्थः ।

इतोऽपि नोपाधिकृतो जीवेश्वरभेद इत्याह ॥ भेदश्चोपाधितः कुत इत्यादिना ॥ न च मठाकाशमहानसाकाशवदुपाधि-

वशात्सुरनरादिजीवेशभेदो युज्यत इति वाच्यम् । मठाकाशाद्याकाशानां स्वभावत एव परस्परभिन्नत्वात् । स्वतो विद्यमानानेवाकाशप्रदेशविशेषानालोकादिप्रदेशविशेषाविव विविच्य घटाद्युपाधयो ज्ञापयन्तीत्यङ्गीकर्तव्यम् । स्वतस्सिद्ध प्रदेशविशेषाभावे घटाद्युपाधेराकाशस्य संयोगो न स्यात् । एकदेशवृत्तित्वात्संयोगस्याकृत्स्नाकाशवर्तिघटसंयोगश्च मठाकाशे न स्यात् । घटेनैव कृत्स्नाकाशस्य ग्रस्तत्वात् । उपाध्यन्तरकल्पिताकाशस्यैकदेशवृत्तित्वे घटसंयोगसंबन्धस्याप्युपाध्यन्तरकल्पिताकाशस्यैकदेशवृत्तित्वमित्यनवस्था स्यात् । एतदाकाशप्रदेशात्संबन्धस्यात्र घटाकाशव्यवहारजनकत्वे देशान्तरस्य घटस्यात्र घटाकाशव्यवहारजनकत्वं स्यादित्यर्थः ।

सुखदुःखादिव्यवस्थान्यथाऽनुपपत्त्याऽमरनरादीशभेदस्स्वाभाविक एव । न तूपाधिकल्पित इत्याह ॥ सुखदुःखादिभोगश्चेत्यादिना ॥ यथा चेतनस्यैकत्वेन शिरश्चरणादिभेदेऽपि तत्तद्गतसुखदुःखाद्यनुसंधानं अथाचेतनस्योक्तत्वेन शिरश्चरणादिभेदेपि तत्तद्गतसुखदुःखाद्यनुसंधानं दृश्यते पादे मे सुखं शिरसि मे वेदनेति । यथा सौभर्यादेर्योगप्रभावेन बहुशरीरग्रहणसमर्थस्य नानादेहगतसुखदुःखाद्यनुसन्धानं दृश्यते । बहुशरीराधिष्ठातुर्योगिन एकत्वात् । एवं सुरनराद्यनेकोपाधिसंबन्धस्यैकत्वे सुरनरादिगत सुखदुःखाद्यनुसंधानं स्यात् । न च बहुशरीरगतसुखदुःखाद्यनुसंधानं

योगिनो नास्तीति वाच्यम् । बहुशरीरग्रहणकामस्य वैयर्थ्यापत्तेः । न च सत्तया शरीराद्युपसंयुज्यते । भोगसाधनत्वरहितशरीराणामनन्तानां लोकसिद्धत्वेन योगिनः पृथक्बहुशरीरग्रहणवैयर्थ्यापत्तेरित्यर्थः ।

आत्मन्यविद्यमानभेदापादकोपाधिभेदस्याज्ञानतस्सिद्धिर्हि निराकृता प्राक् । अधुना सिंहावलोकनन्यायेन कर्मभेदात्तत्सिद्धिरित्येतद्दूषयति ॥ सिद्धौ हि कर्मभेदस्येति ॥ न च जीवेशयोर्जीवानां परस्परं स्वाभाविकभेद इत्यङ्गीकार औपाधिकभेदपक्षोक्तानवस्थित्यादिदूषणोद्भावनं कर्तुं शक्यते । तस्मादौपाधिको जीवेशभेदस्तदुपाधिपूर्वकः प्रपञ्चो मिथ्येत्ययं पक्षस्सर्वोऽपि दुष्ट एव प्रत्यक्षादिप्रमाणविरोधाच्चेत्याह ॥ आत्मस्वभावभेदस्येति ॥

जीवेशयोर्जीवानां च परस्परं भेदं प्रमाणैस्साधयति ॥ चेष्टालिङ्गेनेत्यादिना ॥ स्वात्मनि तावदहं सुखी दुःखीत्याद्यनुभवसिद्धे परदेहगताः जीवास्त्वनुमानेन सिध्यन्ति । तत्तद्देहास्सात्मकाः प्राणादिमत्वात्स्वदेहवदित्यनुमानात् । एवमनुमितेभ्यो जीवेभ्यो भेदस्स्वात्मनोऽनुभवसिद्धः । न ह्येते जीवा अहमिति कस्यचिदनुभवोऽस्ति । सर्वज्ञत्वसर्वशक्तिमत्त्वादिगुणविशिष्टत्वाद्यस्सर्वज्ञः स सर्वविदित्यादिश्रुतिसिद्धादीश्वरादपि भेदो जीवस्यानुभवसिद्धः । अल्पज्ञत्वाल्पशक्तिमत्वदुःखित्वेन जीवस्यानुभूयमानत्वात् । न च सर्वज्ञत्व-

सर्वशक्तिमत्वादेरीश्वरमहिम्नो मिथ्यात्वं वक्तुं शक्यते । सत्यस्सो अस्य महिमेत्यादि विरोधात् । न च साक्षी चेता केवलो निर्गुणश्चेति श्रुत्येश्वरो निर्गुण इति वाच्यम् । निर्गुण शब्दस्यात्र सत्वरजस्तमोगुणराहित्यपरतयोपपन्नत्वेनेश्वर-महिमाऽनिषेधकत्वात् । अन्यथा यस्सर्वज्ञ इत्यादिश्रुति-विरोधात् । यत्किञ्चिदनुमानं महिम्नो मिथ्यात्वे प्रमाणम् । श्रुतिबाधितविषयत्वेनानुमानस्याप्रामाण्यादित्यर्थः ।

अधुना जीवेशाभेदमतेऽधिकारिविषयप्रयोजनासंभवमाह ॥ अतोऽज्ञासंभवादेवेत्यादिना ॥ ब्रह्मणस्सर्वज्ञस्याज्ञानं न संभवतीत्युक्तत्वात्ततोऽन्यस्याज्ञस्य जीवस्याभावादज्ञो जिज्ञासुरधिकारी तन्मते न संभवति । अज्ञानस्यासंभवेना-ज्ञातो ज्ञातव्यो विषयो विषयान्तरे देशान्तरे त्वेष्टव्यो न तु मायावादेऽधिकार्यसंभवेनाज्ञाननिवृत्तिलक्षणं वा फलं न कस्यचिद्विद्यते । शशनृभृङ्गयोरिवाविद्यमानानामधिकारिविषय प्रयोजनानां न कश्चित्संबन्धो घटत इत्यर्थः ।

दुर्घटत्वं भूषणं चेत्यस्यायमर्थः । अविद्यायास्तावद् दुर्घट-स्वभावोऽवगम्यते । स्वशिरच्छेदनादेर्द्रष्टुमयोग्यस्यापि स्वप्ना-दावविद्याप्रभावेन दृष्टत्वात् । एवं दुर्घटाविद्ययैव सर्वज्ञस्स्वयं प्रकाशोऽप्यज्ञो भविष्यति । तथा तयैवाज्ञोऽधिकार्यज्ञातो विषयश्चेऽत्यादि युज्यत इत्यङ्गीकारे दुर्घटघटकाविद्याया एवात्मनोप्यविद्यात्वं तथा तयैव मायिनामन्धन्तमोऽलङ्कारो

नित्यदुःखं शिरोमणिश्च स्यात् । न हि दुर्घटाविद्यया घटमानं न घटत इति वक्तुं शक्यत इति ।

विषयाधिकारिप्रयोजनसंबन्धास्तत्ववादे दर्शयति ॥ अतः पर इत्यादिना ॥ अस्यार्थः सर्वोत्तमो विष्णुर्विषयः । तमीश्वरं स्वात्मादिभ्योऽत्यन्तभिन्नत्वेन स्वयं तस्मादत्यन्तभिन्न-स्सन्स्वसेवया यः पश्यति सोऽधिकारी । तस्मै यथायोग्यं स्वात्मसादृश्यं भगवान्विष्णुर्ददाति । तत्सादृश्यलाभ एव मोक्षाख्यं प्रयोजनम् । विषयभूतस्य विष्णोर्मोक्षस्य दातृदेय-भावलक्षणसंबन्धस्तदिदं सर्वं दृश्यते । परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति ।

न ते विष्णो जायमानो न जातो देवमहिम्नः परमन्तमाप ॥ इत्यादिश्रुतौ भवद्भूतभविष्यद्ब्रह्मरुद्राद्यप्राप्यमाहात्म्यो विष्णुः प्रतिपाद्यते। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इत्यादिश्रुत्याऽयमर्थ उच्यते । इत्युक्तप्रकारेण जुष्टं सेवितं च यदाऽस्य जीवादेरीशं महात्मानं स्वात्मादिभ्योऽन्यं पश्यति तदा वीतशोको भवतीति ।

यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान्पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति ॥

इति यदेतच्छ्रुतेर्मोक्षादिफलदातृत्वं चात्र विष्णोः फलमत उपपत्तेः पुण्येन पुण्यं लोकं नयतीत्यादिवचनसिद्धमवगन्तव्यम् ।

मायावादिनिराकरणस्य प्रयोजनमाह ।। मायावादेति ।। यथा हनुमद्भीमसेनौ सुरारिसंहरणाख्यजगद्धितकरणेन श्रीपतेः प्रीतिं जनयामासतुरेवं श्रीमदानन्दतीर्थाख्यस्सर्वज्ञसूर्योऽपि श्रीपति प्रतिपक्षभूतमायावादतमोनिरसनाख्यजगद्धितकरणेन श्रीपतेः प्रीतिं जनयामासेत्युक्तं भवति । यथा सूर्येण तमोव्याप्तं जगत्स्वप्रभया भासते एवं तत्वदृशा पूर्णप्रज्ञाख्यसर्वज्ञसूर्येण मायावदतमोव्याप्तं जगदित्युक्तप्रकारेण श्रीपतिप्रीत्यर्थ-मवभासितमित्यर्थः । यच्चोक्तं-

द्रवत द्रवताशु मायिनः प्रविशध्वमतंद्रिता गुहाः ।
कमलारमणांबराश्रयस्समुदेत्यखिलज्ञभास्करः ।।

इति । नारायणस्य निर्गुणत्वनिराकारत्वप्रतिपादकं मायावादं निरस्य यदा पश्यः पश्यते रुग्मवर्णमित्यादिश्रुत्युक्तप्रकारसिद्धं नारायणं नमति ।। नम इति ।।

*श्रीमत्पद्मनाभतीर्थभट्टारकविरचिता*
*उपाधिखण्डनटीका तत्वप्रकाशिकाख्या समाप्ता ।।*

श्रीः

अथ श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिम्

# उपाधिखण्डनम्

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमलालयः ॥ १ ॥

## श्रीजयतीर्थभिक्षुविरचिता टीका

### मङ्गलाचरणम्

रमाया रमणं नत्वा गुणमाणिक्यमण्डनम् ।
तत्वप्रकाशिकाव्याख्यां करिष्यामो यथामति ॥

## अथ श्रीब्रह्मण्यतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचिता उपाधिखण्डनटीकायाः टिप्पणी

### मन्दारमञ्जरी

लक्ष्मीकरतलाम्भोजलालनीयपदाम्बुजम् ।
प्रणमामि हयग्रीवं देवताचक्रवर्तिनम् ॥ १ ॥

श्रीमदानन्दतीर्थार्यचरणाम्बुरुहद्वयम् ।
शिवेन्द्रादिशिरोभूषामादरादभिवादये ॥ २ ॥

जयतीर्थमुनिं नत्वा भक्त्याऽस्माकं गुरूनपि ।
तत्वप्रकाशिकाव्याख्यां यथामति विवृण्महे ॥ ३ ॥

प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्यादिप्रयोजनकमविगीत शिष्टाचारानुमित-श्रुतिप्रमाणकं परदेवताप्रणामलक्षणं मङ्गलमाचरन् ग्रन्थकर्ता जयतीर्थाचार्य-श्चिकीर्षितं निर्दिशति ॥ रमाया इति ॥ रमणमिति 'कृतल्युटो बहुलम्' इति कर्त्रर्थे ल्युटः स्मरणात् कर्तरि ल्युट् । रमारमणस्यैव नम्यत्वे हेतुमाह ॥ गुणमाणिक्येति ॥ गुणा एव माणिक्यानि तेषां मण्डनमित्यर्थः ॥ तत्व-प्रकाशिकाव्याख्यामिति ॥ ब्रह्ममीमांसासहितवेदान्तविषयादितत्वप्रकाशिका-व्याख्यामित्यर्थः । करिष्याम इति परसमवेतक्रियाफलाभिधायिना परस्मैपदेन शिष्यानुजिघृक्षया ग्रन्तो निर्मीयत इति सूचयति ।

## उपाधिखण्डनश्रीनिवासतीर्थीयटिप्पणी

पूर्णबोधकरसेवितपादं सज्जनेष्टदमनंतसद्गुणम् ।
वासवीहृदयनन्दनं हरिं बादरायणमहं भजेनिशम् ॥ १ ॥

भाविब्रह्मतयाम्नातानन्दतीर्थानहं मुहुः ।
जयराजमुनींश्चापि वन्दे वेदेशयोगिनः ॥ २ ॥

प्रणम्य यादवाचार्यगुरूणां पादपङ्कजे ।
तत्वप्रकाशिकाव्याख्यां व्याकुर्वे तत्कृपाबलात् ॥ ३ ॥

सर्वज्ञकल्पाष्टीकाकारा जयतीर्थश्रीमच्चरणास्तत्त्वप्रकाशिका परपर्याय-स्योपाधिखण्डनस्य व्याख्यां कर्तुकामाः स्वचिकीर्षितस्य ग्रन्थस्य निर्विघ्नेन परिसमाप्त्यर्थं स्वेष्टदेवतानमस्काररूपं मङ्गलं मनसि कृत्वा शिष्यशिक्षायै ग्रन्थादावुपनिबध्नंतः स्वचिकीर्षितं प्रतिजानते ॥ रमायारमणमिति । अनेन सकलवाङ्मनसदेवताया रमाया अपि वन्दनं कृतमिति ज्ञातव्यम् । गुणा एव माणिक्यानि तान्येव मण्डनान्यलङ्कारभूतानि यस्य स तथोक्तस्तम् ॥ तत्वप्रकाशिकेति । श्रुतितन्मीमांसाशास्त्रप्रतिपाद्यभूतं यत्परमपरं च तत्वं तत्प्रकाशयतीति तन्नामकस्य भगवत्पादकृतप्रकरणस्य व्याख्यामित्यर्थः ।

भगवत्पादीय ग्रन्थव्याख्याने सुराणामेवाधिकारात्कथं तत्र भवतां प्रवृत्तिरित्यत उक्तम् ।। यथामतीति ।

## श्रीमत्सत्यनाथतीर्थविरचिता परशुनाम्नी टिप्पणी

उपाधिखण्डनप्राप्तावायुधापेक्षयाऽन्वहम् ।
भजेऽहं भार्गवं रामं दुष्टा येन निपातिताः ।। १ ।।

ज्ञानादिगुणसंपूर्णममेघानुग्रहं गुरुम् ।
वन्दे सत्यनिधिं भूयः टीकार्थज्ञानसिद्धये ।। २ ।।

श्रीमज्जयतीर्थमुनिः स्वयं मङ्गलमनुष्ठाय शिष्यान् शिक्षयितुं ग्रन्थादौ मङ्गलं निबध्नन् चिकीर्षितं प्रतिजानीते रमाया रमणमिति ।।

नम्यत्वे हेतुमाह गुणमाणिक्येति । गुणाश्च माणिक्यानि च तानि, मण्डनं यस्यासौ तथोक्तः ।

### अवतरणिका

**(टी.) परमात्मनोऽत्यन्तभिन्नस्य स्वतश्चिदानन्दाद्यात्मकस्यापि जीवस्य अनाद्यविद्याकामकर्मादिनिमित्तोऽयं परमार्थ एव अन्यथाकारो दुःखाद्यनर्थो न परमेश्वरप्रसादादृते अपगच्छति । न च असाक्षात्कृतोऽसौ प्रसीदति । न च अविदितस्वरूपः शक्यते साक्षात्कर्तुमिति सकलगुणाकरतया निश्शेषदोषगन्धविधुरतया च तं प्रतिपादयितुमशेषाम्नायाः प्रवर्तन्ते । तदुपकरणभूता च ब्रह्ममीमांसेति परमार्थः ।**

(मं.टि.) ननु किमर्थमिदं प्रकरणमारभ्यते भगवत्पादैः? न च वेदान्तानां समीमांसानां विषयप्रयोजनादिस्वरूपनिर्णयार्थमारभ्यते,

तन्निर्णयश्च वेदान्तादौ जिज्ञासूनां प्रवृत्त्यर्थः, प्रवृत्तिश्च ज्ञानसम्पादनद्वारा मोक्षपर्यवसायिनीति वाच्यम् । मोक्षस्य ईश्वरप्रसादैकसाध्यत्वेन ज्ञाना-नपेक्षणादित्याशङ्क्याह ॥ परमात्मन इत्यादिना न चासाक्षात्कृतोऽसौ प्रसीदतीत्यन्तेन ग्रन्थेन ॥ जीवस्य दुःखाद्यनर्थः परमेश्वरप्रसादादृते नापगच्छतीति सम्बन्धः । ननु दुःखादेरानन्दादिवदनिवृत्तिः किं न स्यात् ? इत्यत आह ॥ अन्यथाकार इति ॥ आनन्दादिवन्न स्वाभाविकत्वं अन्तःकरणधर्मत्वाद्दुःखादीनामिति भावः । तर्हि मायिमत इव दुःखादीनां मिथ्यात्वं स्यादिति । नेत्याह ॥ परमार्थत इति दुःखादीनां स्वरूपेण अन्तःकरणे परमार्थत्वात् तदनुसन्धातृत्वस्य दुःखित्वस्य जीवे परमार्थत्वान्न कस्यापि मिथ्यात्वमित्यर्थः । ननु तस्यानर्थस्यानिमित्तकत्वे स्वरूपा-नन्दादिवत्स्वाभाविकत्वं स्यात् । सनिमित्तकत्वे च निमित्तस्यापि निमित्तान्तरापेक्षायामनवस्था स्यादित्यत आह ॥ अनाद्यविद्याकामकर्मेति ॥ सनिमित्तकत्वेऽपि निमित्तस्यानादित्वान्नानवस्थेत्यर्थः । अविद्या भाव-रूपाज्ञानम् । कामो रागः । कर्म काम्यादिकर्म । अविद्यायाः स्वरूपेणा-नादित्वं इतरयोस्तु प्रवाहत इति द्रष्टव्यम् ।

## स्वरूपतोऽनादित्वपरिष्कारः

ननु किमिदमनादित्वं नाम । किं प्रागभावाप्रतियोगित्वम् ? किं वा कारणशून्यत्वम् ? आद्येऽपि किं स्वप्रागभावाप्रतियोगित्वम् ? अन्य-प्रागभावाप्रतियोगित्वं वा ? प्रागभावमात्राप्रतियोगित्वं वा ? आद्येऽपि किं स्वप्रागभावः प्रसिद्धः ? उत न ? आद्ये कथमयं न तत्प्रतियोगी स्यात् ? इत्यसम्भवः । द्वितीये त्वसम्भवः । स्वप्रागभावाप्रसिद्धौ तत्प्रति-योगित्वाभावस्य दुर्ज्ञानत्वात् । नापि द्वितीयः । घटस्यापि पटप्रागभावा-प्रतियोगिनोऽनादित्वापातात् । तृतीयेऽपि मात्रशब्दः किं कात्स्र्न्यवाची ? किं वा सामान्यवाची ? नाद्यः । घटस्याऽपि कृत्स्नप्रागभावा-

प्रतियोगिनोऽनादित्वापातात् । न हि घटः पटादिप्रागभावप्रतियोगी । न द्वितीयः । आकाशादिपतियोगिकप्रागभावस्याप्रामाणिकत्वात् प्रामाणिका-प्रामाणिकयोः सामान्याभावात् । एवमेव कारणशून्यत्वमिति द्वितीयोऽपि निरसनीयः । तस्मादविद्यानादित्वं दुर्निरूपमिति । अत्रोच्यते ।

घटादौ प्रमिता तावत्प्रागभावेन युक्तता ।
आरोप्य बुद्धिपूर्वं सा गगनादौ निषिद्ध्यते ॥

स्वप्रागभावाप्रतियोगित्वमेवानादित्वम् । यत्तु 'स्वप्रागभावाप्रसिद्धौ स्वप्रागभावप्रतियोगित्वाभावोऽप्यसिद्धः' इति तत्र किं प्रतियोगिनोऽसत्वेऽ-भावोऽपि न स्यात्' इत्यर्थो विवक्षितः ? । किं वा 'प्रतियोगिनोऽसत्वे तज्ज्ञानोपायाभावेन प्रतियोगिमानपूर्वकमभावज्ञानं च न स्यात् इति ? । नाद्यः । प्रागभावप्रध्वंसयोः प्रतियोगिसत्त्वेन व्याप्तत्वेऽपि अत्यन्ताभावस्य तेन व्याप्त्यभावात् । अत्यन्ताभावो हि प्रत्युत प्रतियोगिनोऽसत्त्वमेवापेक्षते । प्रकृते च स्वप्रागभावप्रतियोगित्वात्यन्ताभावस्य लक्षणत्वेन विवक्षितत्वात् । न द्वितीयः । घटादौ प्रमितस्य स्वप्रागभावप्रतियोगित्वस्य गगनादौ बुद्धिपूर्वकमारोप्य निषेधात् । निषेधो हि प्रसक्तिपूर्वकः । प्रसक्तिश्च बुद्धिपूर्वकारोप एव । 'इह भूतले घटो नास्ति' इत्यादौ भूतलान्तरे प्रमितस्य घटस्य इह भूतले बुद्धिपूर्वकमारोप्य निषेधे एतद्भूतलस्य घटाभावः सिद्ध्यति यथा एवमेवात्रापि घटादौ प्रतितस्य स्वप्रागभावप्रतियोगित्वस्य गगनादौ बुद्धिपूर्वकमारोप्य निषेधे गगनस्य स्वप्रागभावप्रतियोगित्वाभावो ज्ञातो भवति । अथ वा घटादौ स्वप्रागभावप्रतियोगित्वस्य दर्शनात् 'गगनं स्वप्रागभावप्रतियोगि वस्तुत्वात् घटवत्' इत्याद्यनुमानाभासैर्गगनादेः स्वप्रागभावप्रतियोगित्वे प्रसक्ते तन्निषिद्ध्यत इति नाप्रसक्तप्रतिषेधः । एवमेव स्वकारणराहित्यस्वोत्पत्तिराहित्यादीन्यनादित्वलक्षणान्यूह्यानि । एवमेव प्रध्वंसाप्रतियोगित्वं नित्यत्वमित्यादीन्यपि समर्थनीयानीति दिक् ।

## प्रवाहतोऽनादित्वपरिष्कारः

नन्वथापि प्रवाहतोऽनादित्वमिति कोऽर्थः ? प्रवाहोऽनादिरित्यर्थ इति चेत् । स किं प्रवाहिभ्यो भिद्यते ? उत न ? आद्येऽपि स किं प्रवाहिभिरारभ्यते ? उत ज्ञाप्यते ? आद्ये कथमयमनादिः स्यात् ? द्वितीयेऽपि किं प्रवाहिणां प्रत्येकं ज्ञापकत्वम् ? किं वा मिलितानाम् ? नाद्यः । एकैकप्रवाहिदर्शनेऽपि प्रवाहबुद्धिप्रसङ्गात् । न द्वितीयः । तेषां क्रमभाविनां मेलनस्यैवासम्भवात् । नाऽपि द्वितीयः । सादिप्रवाह्यभिन्नस्य प्रवाहस्यानादित्वायोगात् । तस्मात्कर्मादीनां प्रवाहतोऽनादित्वमिति व्याख्यानमयुक्तमिति । अत्रोच्यते

प्रवाह इति गीयन्ते सजातीयाः प्रवाहिणः ।
कालेनोपाधिना ग्रस्ता नानावृक्षा वनं यथा ॥

न प्रवाहिभ्योऽतिरिक्तः प्रवाहोऽस्ति । सजातीयानां प्रवाहिणामेव पूर्वापरकालवृत्तित्वेनोपाधिना प्रवाहशब्दार्थत्वात् । दृष्टं चैतत् । एकदेशस्थत्वेनोपाधिना अनेकवृक्षाणामेव वनशब्दार्थत्वात् । तेषामनादित्वं च एकप्रवाहमध्यपतितानेकप्रवाहिप्रतियोगिकप्रागभावावच्छिन्न काला-वृत्तित्वानधिकरणध्वंसप्रतियोगिप्रवाहित्वमिति न कश्चिद्दोषः ।

## प्रकरणस्य प्रयोजनादिसमर्थनम्

ननु जीवस्वरूपानन्दस्य स्वतः सिद्धत्वात् तद्विरुद्धदुःखस्य तत्रा-नवकाशान्नेश्वरप्रसादेन सम्पाद्यमस्तीत्यत आह ॥ स्वतश्चिदिति ॥ चिदानन्दाद्यात्मकस्यापि नापगच्छतीति विधेयविशेषणमेतत् । स्वरूपा-नन्दादिना बाह्यदुःखादेर्विरोधाभावात् दुखादिनिवृत्तेरीश्वरप्रसाद साध्यत्व-मित्यर्थः । उपलक्षणमेतत् । स्वरूपानन्दस्य नित्यत्वेऽपि आविर्भूतानन्दस्य प्रयोजनत्वात् आविर्भावस्येश्वरप्रसादसाध्यत्वादित्यापि द्रष्टव्यम् ।

परमात्माभिन्नस्य जीवस्य कुतोऽनर्थप्राप्तिः? इत्यत आह ॥ परमात्मनो भिन्नस्येति ॥ व्यावहारिकभेदसद्भावेऽपि न पारमार्थिकानर्थो जीवस्य सम्भवतीत्यत आह ॥ अत्यन्तेति ॥ परमार्थत इत्यर्थः । यद्वा भास्करमतनिरासेन अभेदासहिष्णुभेदप्रतिपादनाय अत्यन्तमित्युक्तम् । मोक्षस्येश्वरप्रसादसाध्यत्वेऽपि तत्साक्षात्कारं विना तत्प्रसादाभावात् अपरोक्षज्ञानजनकानां वेदान्तानां सप्रयोजनत्वात् तद्विषयकप्रवृत्तिहेतु-भूतविषयादिनिर्णायकस्यास्य प्रकरणस्यापि सप्रयोजनत्वमित्यभिप्रायः ।

नन्वेवमप्यपरोक्षज्ञानमेव मोक्षपर्यवसायि । वेदान्तैश्च परोक्षज्ञानमेव क्रियत इत्यत आह ॥ न चेति ॥ अविदितेति ॥ परोक्षज्ञानेनाविदितेत्यर्थः । घटाद्यपरोक्षज्ञानस्य परोक्षज्ञानपूर्वकत्वनियमाभावेऽपि ईश्वरापरोक्ष ज्ञानस्यो-पासनासाध्यत्वात् उपासनायाश्च परोक्षज्ञानपूर्वकत्वनियमादिति भावः । नन्वीश्वरपरोक्षज्ञानं लोकत एव प्राप्तमिति किं वेदान्तैः? इत्याशङ्क्याह ॥ सकलेति ॥ यद्यपि कार्यत्वाद्यनुमानेनेश्वरस्वरूप मात्रमवगतम् । तथापि तन्नोपासनाङ्गम् । श्रुत्याद्युक्तगुणविशिष्टस्यैवोपास्यत्वादिति भावः । कर्मकाण्डस्यापीश्वरज्ञानहेतुकर्मप्रतिपादकत्वात् ब्रह्मण्येव महातात्पर्यमित्याह ॥ अशेषेति ॥ न चैवं ब्रह्ममीमांसावैयर्थ्यम् । वेदार्थनिर्णायकन्याय-व्युत्पादकत्वादित्याह ॥ तदुपकरणेति ॥

**(श्री.टि.)** नन्विदं प्रकरणमनारम्भणीयं विषयादिशून्यत्वादित्या-शङ्क्यास्य प्रकरणत्वात्प्रकरणस्य शास्त्रैकदेश सम्बन्धित्वाच्छास्त्रे यद्विषयादिकं तदेव अस्यापि प्रकरणस्य विषयादिकं भविष्यतीत्यभ्युपेत्यास्य शास्त्रस्य विषयादिकं दर्शयति ॥ परमात्मन इत्यादिना । जीवपरमात्मनो-र्भेदाभेदाविति भास्करः । तन्निराकरणायाह ॥ अत्यन्तभिन्नस्येति । दुःखाद्यनर्थस्याप्यानन्दादिवत्स्वाभाविकत्वे प्रसादादपि तन्निवृत्त्यनुपपत्ति-रित्यत उक्तम् । अविद्येत्यादि । अविद्यादेरप्यन्यनिमित्तकत्वे निमित्तान्तर-

परंपरयाऽनवस्था परिहारायोक्तमनादीति । अविद्याभावरूपा । कामो रागः । कर्मकाम्यं निषिद्धं च । आदिपदेन मोहग्रहणम् । अविद्याया अनादित्वं स्वरूपेण । कामादेस्तु प्रवाहत इति द्रष्टव्यम् । अन्यथाकारः स्वरूपापेक्षया-न्यथाप्रतीयमान आकारः । ननु दुःखाद्यनर्थरूपान्यथाकारस्य मिथ्यात्वे तदपरमार्थं स्वत एव निवर्तते । न तत्र परमेश्वरप्रसादापेक्षा । न हि शुक्तौ रजताद्यन्यथाकारनिवृत्तौ कस्यचित्प्रसादोऽपेक्षित इत्यत उक्तम् । परमार्थ एवेति ॥ प्रसादादृत इति । यस्य प्रसादात्परमार्तिरूपादिति श्रुतेरिति भावः ॥ अविदितेति । श्रवणादिनापरोक्षत इत्यर्थः । तर्हि कथं तद्वेदनमपेक्षत इत्यत उक्तम् । सकलेति । आकरः खनिः । गन्धेति । लेशेत्यर्थः । गन्धस्सौर-भलेशयोरित्यमरः । कर्मकाण्डस्यापीश्वरज्ञानहेतुभूतकर्मप्रतिपादकत्वा-द्ब्रह्मण्येव महातात्पर्यमित्याशयेनोक्तम् । अशेषेति । ''ब्राह्मणोपनिषन्मन्त्र भेदावेदगिरोखिला'' इत्युक्तेरित्यर्थः । तर्हि ब्रह्ममीमांसायाः किं कृत्यमित्यत आह ॥ तदुपकरणेति । अर्थनिर्णयेतिकर्तव्यतारूपेत्यर्थः । वेदार्थनिर्णय-करणीभूतन्यायग्रथनात्मकत्वाद्ब्रह्ममीमांसाया इति भावः । यथाहुः ।

''धर्मे प्रमीयमाणे हि वेदे न करणात्मना ।
इतिकर्तव्यता भागं मीमांसा पूरयिष्यतीति ।''

न मायिमत इवायमर्थोऽसत्यः प्रतिपत्तव्य इत्याह ॥ इति परमार्थ इति । सैद्धान्तिकं रहस्यं तत्वमित्यर्थः । तदुपकरणभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्वमिति मायावादखण्डनोक्तेरित्यवगन्तव्यम् ॥

**(सत्य.टि.)** 'अस्य प्रकरणस्य स्वाभिमतप्रमेयसमर्थनम्, पराभिमत-प्रमेयनिरासकत्वं च प्रयोजनम्' इति वक्तुं 'किं तत् स्वाभिमतं प्रमेयम्, किं तत् पराभिमतं प्रमेयम्' इत्याकाङ्क्षानिवृत्तये आचार्याभिमतं प्रमेयं तावदाह परमात्मन इति ।

'जीवपरमात्मनोरत्यन्तभेदः । मुक्तियोग्यजीवानां स्वतश्चिदानन्दाद्यात्मकत्वम् । अनाद्यविद्याकामकर्मादिजन्यः (अनादिभूताविद्या, कामकर्म-कामपूर्वकं कर्म कामकर्मेति यावत्, इत्येतदुभयजन्यः), जीवस्य प्रतीयमानः अन्यथाकारः दुःखाद्यनर्थः परमार्थ एव । स च ईश्वरप्रसादनिवर्त्यः । प्रसादश्च ईश्वरसाक्षात्कारसाध्यः । साक्षात्कारश्च श्रवणादिरूपपरोक्ष-ज्ञानसाध्यः । वेदा(न्ता)नां सकलगुणाकरतया, निःशेषदोषगन्धविधुरतया च ब्रह्मप्रतिपादकत्वम् । मीमांसायाश्च तदुपकरणत्वम् ।' इत्येतावत् आचार्यभिमतप्रमेयम् ॥ अत एव 'वेदा(न्ता)नां गुण-दोषाभावविशिष्टं ब्रह्म विषयः । ब्रह्मणोऽत्यन्तभिन्नः सञ्जीवः अधिकारी । तदीयान्यथाकार-निवृत्तिः, स्वरूपानन्दावाप्तिश्च फलम् । यथोयोगं सम्बन्धः ।' इत्येतदपि आचार्याभिमतं प्रमेयमिति भावः ।

एतेन 'अविद्याशब्दितभावरूपाज्ञानस्य अनादित्वेऽपि काम्यकर्मण-स्तदभावात् उभयोरनादित्वकथनमयुक्तम् । न च अविद्यायाः स्वरूपेणा-नादित्वं, काम्यकर्मणस्तु प्रवाहतोऽनादित्वं विवक्षितमिति वाच्यम्; कर्मणां दुःखहेतुत्वेऽपि तत्करणप्रवाहपतितानां कर्मणां कर्मजनकत्वेनान्यथा-सिद्धानाम् अनर्थहेतुत्वाभावेन 'अनादिकर्मनिमित्त' इत्युक्त्ययोगात् ।'' इति निरस्तम्, अनादित्वस्य अविद्यामात्रविशेषणत्वाभिधानेन काम्यकर्म-विशेषणत्वानभिधानात् ।

एतेनैव ''जीवगतान्यथाकारनिवृत्तये सकलगुणाकरतया, निःशेषदोष-गन्धविधुरतया च ब्रह्म प्रतिपादयितुम् अशेषाम्नायाः प्रवर्तन्ते' इत्येतावतैव आचार्याभिमतविषयादिसूचनसम्भवात् शेषवैयर्थ्यम्'' इति परास्तम् ।

एतावत् आचार्याभिमतं प्रमेयम् ।

## मायावाद्यभिमतविषयादिनिरूपणम्

**(टी.) अपरे तु स्वतः परमात्मभूतस्यैव जीवस्य अज्ञानादि निमित्तोयमपरमार्थ एवानर्थोऽद्वैतज्ञानैकनिबर्हणीय इत्यतोऽ-स्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते । तदितिकर्तव्यतारूपा ब्रह्मगीमांसा चेति मन्यन्ते ।**

(मं.टि.) वेदान्तानां विषयादितत्वनिर्णयार्थं चैतत्प्रकरणम् । किं विषयाद्याभासप्रसक्तिरस्ति ? इत्याशङ्क्य अस्तीत्याह ॥ अपरे त्वित्यादिना मन्यन्त इत्यन्तेन ग्रन्थेन ॥ वेदान्तस्य प्रयोजनमात्मैकत्वविद्येत्याह ॥ आत्मैकत्वविद्येति ॥ प्रतिपत्तिशब्देन प्राप्तिर्विवक्ष्यते । आत्मैकत्वविद्यायाः प्रयोजनमाह ॥ अनर्थोऽद्वैतज्ञानैकनिबर्हणीय इति ॥ यद्वा वेदान्ता-नामात्मैकत्वं विषय इत्याह ॥ आत्मैकत्वविद्येति ॥ प्रतिपत्तिशब्देन प्राप्तिर्विवक्ष्यते । यद्धि यत्प्रतिपत्त्यर्थं स तस्य विषय इति प्रसिद्धम् । प्रयोजनमाह ॥ अनर्थोऽद्वैतज्ञानैकनिबर्हणीय इति ॥ इत्यनर्थनिबर्हणार्थमिति शेषः । अनर्थस्याद्वैतज्ञाननिवर्त्यत्वे हेतुमाह ॥ अपरमार्थ इति ॥ अपरमार्थत्वे हेतुमाह ॥ अज्ञानादिनिमित्त इति ॥ निमित्तशब्दः कारणमात्रवाची तद्विशेषोपादाने पर्यवस्यतीति द्रष्टव्यम् । तत्र हेतुमाह ॥ स्वतः परमात्मभूतस्येति ॥ ननु स्वतः परमात्माभिन्ने जीवे स्वाभाविकानर्थ इव अज्ञाननिमित्तकोऽपि न सम्भवतीत्यत आह ॥ अयमिति ॥ युक्त्यसहत्व-मनर्थस्य भूषणं । प्रतीतिमात्रं तु प्रत्यक्षसिद्धत्वान्नापलापार्हमिति भावः। ननु ज्ञानस्याज्ञानमात्रनिवर्तकत्वान्न दुःखादिनिवर्तकत्वं, तत्राह ॥ अस्य प्रहाणायेति ॥ अस्येत्यज्ञानस्येत्यर्थः । साक्षादनर्थनिवृत्तिहेतुत्वाभावेऽपि अनर्थहेत्वज्ञाननिवृत्त्यर्थमात्मैकत्वविद्येत्यर्थः । अविद्यानिवृत्तेः कथमनर्थ-निवृत्तिहेतुत्वम् ? तत्राह ॥ अनर्थहेतोरिति ॥ अनर्थोपादनस्येत्यर्थः । उपादाननिवृत्तेरुपादेयनिवृत्तिहेतुत्वं सुप्रसिद्धमिति भाव ।

**(श्री.टि.)** ननु प्रकारान्तरेण विषयादि प्रसक्तेरेवाभावाद्वेदतन्मीमांसा-शास्त्रयोर्विषयादितत्वनिर्णयार्थमिदं प्रकरणमित्ययुक्तमित्यतः प्रकारान्तरेण विषयादिप्रसक्तिं दर्शयति ॥ अपरेत्विति । वेदान्तानामात्मैकत्वं विषय इत्याह ॥ आत्मैकत्वविद्याप्रतिपत्तय इति । प्रतिपत्तिशब्देन प्राप्तिर्विवक्षिता । ऐक्यज्ञानप्राप्त्यर्थमित्यर्थः । अज्ञाननिवृत्तिः प्रयोजनमित्याह ॥ अनर्थेति । अनर्थो दुःखादिः । तद्धेतोस्तदुपादानस्याज्ञानस्य । प्रहाणाय निवृत्तय इत्यर्थः । नन्वनर्थहेतोरज्ञानस्य प्रसादेनापि निवृत्तिसम्भवात्किमात्मैकत्व-ज्ञानेनेत्यत उक्तम् । अद्वैतज्ञानैकनिबर्हणीय इति । अज्ञाननिवृत्तिद्वारेत्यर्थः । यतोज्ञानमज्ञानस्यैव साक्षान्निवर्तकमित्यङ्गीकारादैक्यज्ञानेनोपादान भूतेऽज्ञाने निवृत्ते तत्कार्यं स्वयमेव नश्यतीति भावः । सत्यस्यैव निगडबन्धादेर्निवृत्तौ प्रभुप्रसादापेक्षा । न तु मिथ्याभूतस्य शुक्तिरूप्यादेरित्यभिप्रेत्योक्तम् । अपरमार्थ एवेति । अपरमार्थत्वे हेतुमाह ॥ अज्ञानादिनिमित्त इति । कारणमात्रवाचीनिमित्तशब्दोत्र तद्विशेष उपादाने पर्यवस्यति । तथाचा ज्ञानोपादानकत्वान्मिथ्यात्वम् । अज्ञानतत्कार्ययोरन्यतरत्वस्यैव मिथ्यात्व लक्षणत्वादिति भावः ।

ननु जीवे दुःखाद्यनर्थरूपबन्धस्य अज्ञानोपादानकत्वान्मिथ्यात्वं कुतोङ्गीक्रियते । सत्यत्वमेव कस्मान्न स्यादित्यत उक्तम् । स्वतः परब्रह्मभूतस्येति । तथाच जीवगतदुःखादिबन्धस्य सत्यत्वे विरुद्ध-धर्माधिकरणत्वेन जीव ब्रह्मणोरैक्यायोगादिति भावः ।

**(सत्य.टि.)** तत्र 'विषयादिचतुष्टयम् इह प्रकरणे आचार्येण समर्थ्यते' इति द्योतनाय सर्वाभिधानस्यावश्यकत्वात् पराभिप्रेतं प्रमेयमनुवदति अपरे त्विति ।

'जीवस्य परमात्मना अत्यन्ताभेदः । अज्ञानादिनिमित्तः जीवस्य प्रतीयमानः, दुःखाद्यनर्थः न पारमार्थिकः । अद्वैतज्ञानं तन्निवर्तकम् ।

वेदान्ताश्च अद्वैतज्ञानहेतवः । ब्रह्ममीमांसा तदितिकर्तव्यतारूपा ।' इत्येतावत् पराभिमतं प्रमेयम् ।। अत एव 'आत्मैकत्वं वेदान्तविषयः । अज्ञो जीवः अधिकारी । अज्ञाननिवृत्तिद्वारा अनर्थनिवृत्तिः फलम् । यथायोगं सम्बन्धः ।' इत्यपि पराभिप्रेतं प्रमेयमिति भावः ।

### मङ्गलाचरणम्

(टी.) तमेतं शास्त्रस्य पराभिमतमधिकारिविषयप्रयोजन सम्बन्धं निरस्य स्वाभिमतं समर्थयितुमिदं प्रकरणामारभमाणो भगवानाचार्यो नारायणस्तवनतत्प्रीतिप्रार्थनारूपमादितो मङ्गल माचरति ।

मूलम्—

नारायणोऽगण्यगुणनित्यैकनिलयाकृतिः ।
अशेषदोषरहितः प्रीयतां कमलालयः ।। १ ।।

अगण्यगुणानां नित्यैकनिलया सदा मुख्याश्रया आकृतिः मूर्तिर्यस्यासौ तथोक्तः । प्रीयतां अस्माकमिति शेषः । अभ्यर्हितत्वेन सिद्धत्वात् इदं नोक्तम् । अत्राऽद्य विशेषणद्वयं स्तुत्यर्थमपि उत्तरप्रबन्धप्रसङ्गोपक्षेपाय कृतम् । अथ वा नानिर्धारितस्वरूपस्य प्रसादाशंसनं युक्तम् । न च लक्षणेन विना निर्धारणमिति लक्षणद्वयाभिधानमिदम् । यथोक्तम्

अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित् । इति ।।

**नारायणप्रीतिरिव रमायाः प्रीतिरपि प्रार्थनीयेति ज्ञापनाय कमलालयः इत्युक्तम् ।**

(मं.टि.) तस्माद्विषयाभासस्य प्रसक्तत्वात्तन्निराकरणं युक्तमित्याह ॥ तमेतमिति ॥ तदनेनास्य प्रकरणस्य वेदान्तविषयादितत्वं विषयः । तदवधारणं प्रयोजनं । वेदान्तशुश्रूषुरधिकारी । सम्बन्धस्तु यथायोग्यमूहनीय इत्युक्तं भवति ।

ननु मीमांसया वेदान्तार्थनिर्णये विषयादिकं तत्रैव निश्चेष्यत इति किमनेन प्रकरणेनेति चेत् नैष दोषः । वेदान्तविषयकप्रवृत्तिहेतुभूतस्य विषयादि-तत्वावधारणस्य प्रवृत्तिसाध्यवेदान्तश्रवणसाध्यत्वे अन्योन्याश्रयप्रसङ्गेन प्राक् प्रवृत्तेः सामान्याकारेण तज्ज्ञानोपायप्रकरणारम्भोपपत्तेः ।

नारायणस्तवनेति ॥ नारायणस्तवननारायणप्रीतिप्रार्थनरूपमङ्गल-द्वयाचरणं 'भूयांसि मङ्गलान्यनुष्ठितानि भूयसो विघ्नान् घ्नन्ति' इति सूचनार्थम् । तेन क्वचिन्मङ्गले कृतेऽपि प्रारिप्सितपरिसमाप्त्यदर्शनान्मङ्गलं न परिसमाप्त्यादिहेतुरिति शङ्का निरस्ता । तत्र विघ्नानां भूयस्त्वान्मङ्गल-स्याल्पीयस्त्वादिति भावः ॥ मुख्याश्रयेति ॥ अन्येषां बहुगुणाश्रयत्वमात्रेण अगण्यगुणाश्रयत्वमौपचारिकम् । अस्य तु मुख्यमित्यर्थः । यद्यपि गुणगुणिनोरत्यन्ताभेदः । तथापि विशेषबलादाश्रयाश्रयिभावो द्रष्टव्यः । विशेषस्वरूपं च विवेचयिष्यामः ॥ अभ्यर्हितत्वेनेति ॥ कमलविशिष्ट-नारायणप्रीतेः स्वस्यैव मुख्यपात्रत्वात् मुख्ये सम्भवत्यमुख्यायोगादित्यर्थः अथ वा असति विशेषे स्वाभिलष्यमाणेनेष्टेन अन्तरङ्गतया स्वस्यैव सम्बन्धदर्शनादित्यर्थः । यद्वा 'भिक्षां देहि' इत्यादाविव वाक्यप्रयोक्तृत्वेन स्वस्यैव प्रकृतत्वादित्यर्थः ॥ अत्राद्यमिति ॥ न चोभयत्र तात्पर्ये वाक्यभेदः शङ्क्यः । स्तुतौ तात्पर्येण विशेषणद्वये उत्तरग्रन्थारम्भोपपादनस्य

प्रासङ्गिकत्वादिति अपिशब्दार्थः । पक्षान्तरमाह ।। अथ वेति ।। यद्यपि एकेनैव लक्षणेन वस्तुसिद्धिः । तथापि एकलक्षणोपपादनायान्यस्मिन् कथिते अव्याप्त्याद्यभावात्तदपि लक्षणं भवतीत्यर्थः ।। १ ।।

**(श्री.टि.)** एवं विषयाद्याभासस्य प्रसक्तत्वात्तन्निराकरणेन स्वाभिमत-विषयादिसमर्थनार्थमेतत्प्रकरणारम्भो युक्त एवेत्याह ।। तमेतमिति ।। स्वाभिमतमिति । गुणपूर्णो निर्दोषो भगवान्विषयः । तज्ज्ञानं मोक्षश्च प्रयोजनम् । योग्यस्तदिच्छुरधिकारी । यथायोग्यं सम्बन्ध इति स्वाभिमत-मित्यर्थः । नित्यशब्दार्थस्सदेति । एकशब्दार्थो मुख्येति । निलयशब्दार्थ आश्रय इति । मूर्तिः शरीरम् । कण्ठतोनुक्तौ निमित्तमाह ।। अभ्यर्हि-तत्वेनेति । कमलाविशिष्टनारायणप्रीतेः स्वस्यैव मुख्यपात्रत्वेन स्वेषामिति सिद्धत्वात् प्रमितत्वादित्यर्थः ।

यद्वा यथा भिक्षां देहीत्यादौ वाक्यप्रयोक्तृतया स्वस्यैव प्रकृतत्वेन सिद्धत्वान्ममेति नोच्यते । एवमिहापि प्रीयतामिति वाक्यप्रयोक्तृत्वेन स्वेषामिति प्रकृतत्वेन सिद्धत्वादस्माकमिति नोक्तमित्यर्थः ।

नन्वगण्यगुणेत्यादिविशेषणद्वयं किमर्थमिति चेत् । स्तुत्यर्थमिति ब्रूमः । तर्हि जगज्जन्मादिकर्तृत्वादिरूपविशेषणान्तरेणापि स्तुतिसम्भवादगण्य-गुणेत्यादिविशेषणद्वयेनैव स्तुतौ किं प्रयोजनमित्यत आह ।। अत्राद्यमिति ।। उत्तरेति । उत्तरप्रबन्धस्योत्तरग्रन्थस्य प्रसङ्गः प्रसक्तिः तस्योपक्षेपाय प्रारम्भायेत्यर्थः । एतल्लक्षणद्वयस्य नारायणस्वरूपनिर्धारणहेतुत्वेऽनु-व्याख्यानसंमतिमाह ।। यथोक्तमिति । व्याख्यातं च सुधायाम् । कियती सीमा परमात्मत्वस्येत्यत आह । अत इति । अशेषगुणोन्नद्धत्वं निर्दोषत्वं च प्रत्येकं निर्धारणहेतुत्वेनोक्तम् । स्वमते ब्रह्मण ईश्वरातिरिक्तस्याभावं सूचयितुमीश्वर इत्युक्तम् । इदं च लक्षणं ब्रह्मणः श्रुत्यादिसिद्धमिति

हिशब्दार्थः । यावद्वस्तु अशेषगुणोन्नद्धं निर्दोषं तावद्रामकृष्णादिरूपजातं वस्तु ईश्वरो नामेत्युक्ते समुदायैक्येन भेदाभेदावङ्गीकृताविति प्रतीयते । तन्निराकरोति । तत्रेति । क्वचिदिति । परस्परं परमात्मना चेत्यर्थ इति । प्रार्थनीयेति । तस्याः सकलवाङ्मनसदेवतात्वादिति भावः ।

**(सत्य.टि.)** आदितो मङ्गलमाचरतीति । अनेन निबन्धः सूचितः, मङ्गलस्य निबन्धनेन विना प्रकरणादित्वायोगात् ।

ननु 'कमलालयः अस्माकं प्रीयताम्' इति वक्तव्यम्, इत्यत आह अस्माकमिति शेष इति ।

इतःपरं श्रूयमाणस्य 'अभ्यर्हितत्वेन सिद्धत्वादिदं नोक्तम्' इतिवाक्यस्य अर्थोऽस्माभिर्न ज्ञातः ।

आद्यं विशेषणद्वयं स्तुत्यर्थमिति ॥ इतःपरं टीकायां श्रूयमाणम् 'अपि' इत्येतत् प्रक्षिप्तम् । 'आद्यं विशेषणम्' इति उच्छिन्नपाक्षेम् । 'उपय' इत्यतःपरं 'च' शब्द उच्छिन्नः ॥ ततश्च एवं टीकावाक्यपाठः 'अत्र आद्यं विशेषणद्वयं स्तुत्यर्थम् । आद्ये विशेषणम् उत्तरप्रबन्धप्रसङ्गोपक्षेपाय च कृतम् ।' इति । (अत्र 'द्वयम्' इति प्रक्षिप्तम् । 'आद्यविशेषणं स्तुत्यर्थमपि' इति टीकावाक्यपाठः ।) ॥ अवश्यं चैतदेवं विज्ञेयम् ; 'अत्राहुरद्वैतवादिनः' इत्युत्तरग्रन्थे आद्यविशेषणेनैवोपक्षेपात्, निर्दोषत्वस्य परेणाप्यङ्गीकारेण तस्यानुपक्षेपकत्वात् ।

अतोऽशेषगुणोन्नद्धमिति । यावत् रामकृष्णादि, तावत् सर्वं ईश्वर-शब्दाभिधेयम् ॥ ननु एवं तर्हि ईश्वरैक्यभङ्गः, इत्यत उक्तं तत्र भेदोऽपि न क्वचिदिति । तेषु रामकृष्णादिषु क्वचिदपि न भेदः । सर्वत्राप्यैक्यमेवेत्यर्थः ।

## जीवब्रह्मैक्यस्य शास्त्रार्थत्वेन गुणपूर्णत्वाक्षेपः

**(टी.) अत्राहुरद्वैतवादिनः, जीवब्रह्मणोरेकत्वं खलु सकल-वेदान्ततन्मीमांसाशास्त्रप्रतिपाद्यम् । न च तत् नारायणाख्यस्य परब्रह्मणः सदा अगण्यगुणाश्रयत्वे सम्भवति । अताद्दग्रूपत्वात् जीवस्य । न हि परस्परविरुद्धस्वभावयोरेकत्वं दृष्टम् । अतो न स्वभावतोऽगण्यगुणाधिकरणत्वं नारायणस्येति ।**

**(मं.टि.)** वेदान्तादिविषयादितत्वनिर्णयाय प्रकरणं चेत् किमनेन अकाण्डताण्डवायितेन अज्ञाननिराकरणेन ? इत्याशङ्क्य तत् सङ्घटयितुं शङ्कते ॥ अत्राहुरित्यादिना ॥ नारायणः किं परब्रह्म ? उत न ? न चेदपसिद्धान्तः । ब्रह्म चेत् सोऽप्यल्पगुणः स्यात् । जीवो वा अनन्तगुणः स्यात् । विरुद्धधर्माश्रययोरभेदायोगात् । अभेदस्य च प्रामाणिकत्वादिति चोद्यार्थः । ननु त्वन्मते जीवब्रह्मणोः स्वाभाविकाभेदेऽपि सर्वज्ञत्वाल्प-ज्ञत्वादिवत् ममापि अनन्तगुणवत्वतदभावव्यवस्था किं न स्यात् ? इत्यत आह ॥ स्वभावत इति ॥ मम तु सार्वाज्ञ्यादिकमौपाधिकमित्यर्थः ।

**(श्री.टि.)** उत्तरप्रबन्धप्रसङ्गोपक्षेपायेत्युक्तम् । तद्दर्शयति ॥ अत्राहुरिति । तत् एकत्वम् ॥ अताद्दग्रूपत्वादिति । नारायणवदनन्तगुणाश्रयत्वाभावादिति भावः । अस्तु वा जीवस्याताद्दग्रूपत्वम् । तथाप्यैक्यमेव किं न स्यादित्यत आह ॥ नहीति । जलानलवदिति भावः । स्वभावतः परमार्थतः ।

**(सत्य.टि.)** न च तदिति । ननु 'नारायणस्य सदाऽगण्यगुणाश्रयत्वं ऐक्यं न सम्भवति' इत्युक्तम्, ब्रह्मणो निर्दोषत्वेऽपि दोषिणा जीवेन ऐक्यवत् ब्रह्मणो गुणाश्रयत्वेऽपि अताद्दग्रूपेण जीवेन ऐक्यसम्भवात् । अन्यथा ईश्वरस्य निर्दोषत्वं वास्तवं न स्यात् ॥ किञ्च परब्रह्मणो

गुणस्वरूपत्वं न स्यात्, गुणाश्रयत्ववत् गुणस्वरूपत्वस्यापि अतादृग्रूपजीवैक्यविरोधित्वात्। न च इष्टापत्तिः, ब्रह्मणो ज्ञानानन्दस्वरूपत्वस्य परेणाङ्गीकारात्।

अपि च इदं वक्तव्यम्- अविद्यमानमेव जीवब्रह्मणोरैक्यं भवतीति वेदान्तैरुच्यते, उत अनाद्यनन्तकालेषु जीवब्रह्मणोरैक्यमस्तीत्युच्यते ॥ नाद्यः, अपसिद्धान्तात्। द्वितीये, कथं विरुद्धधर्माधिकरणत्वम्; एकस्मिन्नेव विद्यमानयोः अनन्तगुणाधिकरणत्वतदभावयोः विरुद्धत्ववचनस्यरिक्तत्वात्।

अपि च चिन्मात्रैक्यस्यैव तत्सिद्धान्तत्वेन जीवब्रह्मैक्यस्य वेदान्तप्रतिपाद्यत्वाभावात् ॥ तत्सिद्ध्ये श्रुतिप्रतिपन्नगुणाश्रयत्वत्यागायोग इति चेत्, उच्यते। इत्थं किल पूर्वपक्षी मन्यते। चिन्मात्रै(त्रस्यैव ब्रह्मैक्यम्)-क्यमेव, न विशिष्टैक्यम्। तस्य (चैक्यस्य) अगण्यगुणाश्रयत्वनिर्दोषत्वगुणस्वरूपत्वानि विरुद्धानि (इव) भान्ति; तथापि गुणस्वरूपत्वनिर्दोषत्वे, ब्रह्मणो हातुं शक्ये, ऐक्यमिव तयोरपि तत्त्वावेदकश्रुतिसिद्धत्वात्। अत एव न तयोर्विरोधः, समानाधिकरणतया प्रमाणसिद्धयोः विरुद्धत्ववचनस्य रिक्तत्वात्। गुणाश्रयत्वं तु ऐक्यविरोधित्वात् त्याज्यमेव, गुणाश्रयत्वावेदकश्रुतेः 'नेह नानाऽस्ति किञ्चन' इतिनिषेधायानुवादकत्वेन व्यवस्थापकत्वाभावात्।

यदपि चोक्तम् जीवब्रह्मणोरैक्यं अविद्यमानमेव, उत अनाद्यनन्तकालेषु जीवब्रह्मणोरैक्यमस्ति' इति, तत्र अनाद्यनन्तकालीनमेव जीवब्रह्मणोरैक्यम् इति ब्रूमः। न च अगण्यगुणाश्रयत्वतदभावयोः विरुद्ध वानुपपत्तिः, अगण्यगुणावेदकप्रमाणस्य अनुद्यादकत्वेन प्रापकत्वाभावात्। एकाधिकरणनिष्ठतया प्रमितत्वाभावेन भावाभावत्वप्रयुक्तविरोधस्य अवर्जनीयत्वात्। बाधकं विना भावाभावयोर्विरोधपरित्यागे विरोधवार्तैव उच्छिद्येत।

यदपि चोक्तम् 'जीवब्रह्मणोरैक्यस्य वेदान्तावेद्यत्वेन न त(वि)द-न्यथाऽनुपपत्त्या अगण्यगुणाश्रयत्वं त्याज्यम्' इति तत् समतमेवास्माकम्, जीवब्रह्मैक्यशब्देन चिन्मात्रैक्यमेवोक्त्वा तदनुपपत्त्यैव धर्माणां त्याज्य-त्वाभिधानात् इति ।

### अज्ञानानुपपत्त्या ऐक्यस्य शास्त्रार्थत्वनिरासः

**(टी.) तदयुक्तम्, स्यादिदं यदि जीवब्रह्मणोरेकत्वं शास्त्रार्थः स्यात् । न चैवं सम्भवति । तथात्वे शास्त्रस्य अनारम्भणीयत्व प्रसङ्गात् । यत् खलु अधिकारिविषयप्रयोजनसम्बन्धवत् तत् आरम्भणीयं दृष्टम् । न च एतत् अद्वैतवादे सम्भवति अधिकार्यादिसिद्धेरज्ञानसिद्ध्यधीनत्वात् । न च तत्पक्षे अज्ञानमुपपद्यते । कथम् ? इति तत्राह**

## मूलम्— अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ।

**अज्ञानं हि कस्यचित् क्वचित् सम्भवति । न च तत्पक्षे परमात्मातिरिक्तं वस्तु विद्यत इति तस्यैवाज्ञानं वक्तव्यम् । न च तस्य कुतश्चन कुत्रापि तत् सम्भवति सर्वज्ञत्वात् । अतो व्यापकीभूताश्रयविषयानुपपत्त्या व्याप्यस्याज्ञानस्याप्यनुपपत्तिः।**

**(मं. टि.)** अभेदस्य प्रामाणिकत्वमेवासिद्धमिति परिहरति ।। तद-युक्तमिति ।। यत्खल्वधिकारिरिति ।। अधिकारिस्वरूपमात्रज्ञानस्य अधिकारि-प्रवृत्तिहेतुत्वाभावेऽपि अधिकारिविशेषणापरिज्ञाने 'अहमधिकार्यस्मिन्न वा' इति सन्देहेन प्रवृत्तिप्रतिबन्धात् अधिकारिविशेषणज्ञानमपि प्रवृत्त्यङ्गमिति भावः ।। अधिकार्यादीति ।। अज्ञानिनोऽधिकारित्वात् अज्ञातस्य विषयत्वात्

अज्ञाननिवृत्तेश्च प्रयोजनत्वादिति भावः । सर्वज्ञस्याज्ञानं न घटते चेत् 'निराश्रयमज्ञानमस्तु' इत्याशङ्क्य साश्रयत्वनियममाह ।। अज्ञानं हि कस्यचिदिति ।। सविषयत्वं चाङ्गीकरणीयमित्याह ।। क्वचिदिति ।। 'अस्य अत्र अज्ञानं' इत्यनुभवादज्ञानस्य विषयसापेक्षत्वं आश्रयसापेक्षत्वं अङ्गीकर्तव्यमिति हिशब्दार्थः । नन्वथापि परमात्मातिरिक्त एवाश्रयोऽस्त्वित्यत आह ।। न चेति ।। परमात्मातिरिक्तं अज्ञानाधिकरण पारमार्थिकं ? किं वा अपारमातिकं ? आद्यं दूषयति ।। वस्तु न विद्यत इति ।। द्वितीये तस्याज्ञानकल्पितत्वादन्योन्याश्रयः स्यादिति भावः । फलितं दर्शयति ।। इतीति ।। सर्वज्ञस्यापि दोषबलादज्ञानं किं न स्यात् ? इत्यत आह ।। कुतश्चनेति ।। दोषस्याप्यविद्यां विना असम्भवादिति भावः । अथ वा कुतश्चनेति प्रतीकमुपादाय कुत्र चेति तद्व्याख्या । एवं च विषयासम्भवप्रतिपादनमपि कारिकारूढं भवति । ततश्च विषयासम्भवेनाज्ञानासम्भवमुपपादयितुं 'अज्ञानं हि क्वचिद्भवति' इत्यज्ञानस्य सविषयत्वसमर्थनं टीकाकारीयं सङ्गच्छते । उक्तार्थे हेतुमाह ।। सर्वज्ञत्वादिति ।। समानाश्रयसमानविषयकज्ञानाज्ञानयोर्विरोधात् ईश्वरज्ञानस्य च सर्वविषयकत्वात् न तस्य किञ्चिद्विषयकमज्ञानं सम्भवतीत्यर्थः । उपसंहरति ।। अत इति ।।

ननु कथमत्र प्रयोगः ? अज्ञानं नास्ति आश्रयसापेक्षत्वे सति तद्रहितत्वात्, विषयसापेक्षत्वे सति तद्रहितत्वाद्वा, साश्रयनिराश्रयान्यतरानन्तर्भावाद्वा, सविषयनिर्विषयान्यतरानन्तर्भावाद्वा इत्यादिषु आश्रयासिद्धेः । अथैवं प्रयोगः, प्रमेयत्वं साश्रयनिराश्रयान्यतरमात्रनिष्ठं सविषयनिर्विषयान्यतरमात्रनिष्ठं वा धर्मत्वात् घटत्वदिति । अनेन चानुमानद्वयेन साश्रयनिराश्रयसविषयनिर्वियानन्तर्भाविनोऽज्ञानस्य असत्वमापाद्यत इति चेत् अत्र वक्तव्यम्, किं मात्रपदव्यावर्त्यमिति । उभयव्यतिरिक्तमिति चेत् तत्किं प्रमितं ? उत न? नाद्यः । प्रमितत्वादेव तत्र प्रमेयत्वसम्भवेन

मात्रशब्देन पुनस्तद्व्यावर्तने व्याघातात् । न द्वितीयः । अप्रमितव्यावृत्त्यर्थं पदप्रयोगानुपपत्तेः । तस्मात् 'व्याप्यस्याज्ञानस्याप्यभावः' इति कथमुक्तं ? इति चेत् इत्थमभिप्रेत्योक्तम् । जगदुपादानं नाज्ञाननिराश्रयत्वात् निर्विषयत्वादित्यन्वयव्यतिरेकिद्वयेन उभयवादिसिद्धस्य जगदुपादानस्याज्ञानत्वनिषेधात् न त्वदभिमताज्ञानसिद्धिः । नियमेन आश्रयविषयज्ञप्तिसापेक्षप्रतीत्यविषयत्वस्य हेतुत्वान्न कश्चिद्दोषः । यद्वा पररीत्या प्रसक्तं मात्रपदेन व्यावर्त्यत इति पूर्वप्रयोग एवास्त्विति ।

**(श्री.टि.)** शास्त्रस्य वेदतन्मीमांसाशास्त्रस्य ॥ अद्वैतवादे अद्वैतसिद्धान्ते । अज्ञानसिध्यधीनत्वादिति । अज्ञो ह्यधिकारी । अज्ञातो हि विषयः। अज्ञाननिवृत्तिः प्रयोजनमित्येवमधिकार्यादिसिद्धेरज्ञानसिध्यधीनत्वादित्यर्थः ।

ननु सर्वज्ञस्याज्ञताऽज्ञानाश्रयता न घटत इति चेन्निराश्रयं निर्विषयमेवास्त्वज्ञानमित्यतस्तस्य साश्रयत्वादिनियममाह ॥ अज्ञानं हीति । क्वचिद्विषये । अस्यास्मिन्न ज्ञानमिति प्रतीतेरिति भावः ।

ननु तर्हि जीवस्यैवास्त्वज्ञानं घटादिविषय इत्यत आह ॥ नच तत्पक्ष इति । वस्तु जीवाख्यम् । कुतः शब्दः कुत्रेत्यर्थे च शब्दोऽप्यर्थ इत्यभिप्रेत्योक्तम् ॥ कुत्रापीति । विषय इत्यर्थः ॥

**(सत्य.टि.)** अनारम्भणीयत्वप्रसङ्गादिति । प्रेक्षावदनुपादेयत्वप्रसङ्गादित्यर्थः ।

अज्ञानं हि कस्यचिदिति । कस्यचित् पुरुषस्य, कुत्रचित् विषये भवतीत्यर्थः । सर्वज्ञत्वादिति । ननु 'प्रतिवाद्यसिद्धोऽयं हेतुः, भवद्भिरेव 'तत्पक्षे परमात्मातिरिक्तं वस्तु न विद्यते' इत्यभिधानात् । न हि सर्वज्ञता

सम्भवति' इति चेत्; न, भावानवबोधात्। न हि अस्माभिः 'मायावादिमते जगदसत्' इत्युक्तम्, येन उक्तदोषः स्यात्, किन्नाम 'यत्राज्ञानं त्वया वक्तव्यं तद्वस्तु परमात्मभिन्नं न, किन्तु तदात्मकमेव। तथाच परमात्मन एव अज्ञानं वक्तव्यम्' इत्युक्तम् इति।

## सर्वज्ञत्वाज्ञानाभावयोर्व्याप्तिसमर्थनम्

**(टी.) ननु सर्वज्ञस्याज्ञता न घटत इत्यत्र नान्वयदृष्टान्तः। परमात्मना विना अन्यस्य सर्वज्ञस्याभावात्। नापि व्यतिरेक-दृष्टान्तः। अज्ञानाश्रयस्यान्यस्य परेणानभ्युपगमात्। तत् कथमेतत् ? इति। मैवं। 'यो यत्र ज्ञानवान् नासौ तत्राज्ञान-वान्' इति सामान्यव्याप्तेरविरोधात्। ननु सर्वं हि यो जानाति स सर्वज्ञः। तिस्रश्चास्य विधाः सम्भवन्ति। प्रमाणतो वा सर्वं जानीयात् भ्रान्त्या वा स्वभावसिद्धया प्रज्ञया वा। न चैता विधा विना अज्ञानेनोपपद्यन्ते। कूटस्थस्य अज्ञानादृते प्रमातृत्वायोगात्। भ्रान्तेश्च अज्ञान-कार्यत्वात्। स्वरूपप्रज्ञायाश्च नान्तरेणाज्ञानमशेषार्थसङ्गतिः। असङ्गत्वात् 'असङ्गो ह्ययं पुरुषः' इति श्रुतेः। अतः सर्वज्ञ-ताप्यज्ञानवत्तामाक्षिपत्येव परमात्मनो, न प्रतिक्षिपतीति। मैवम्, मा भूत् प्रमाणेन मा च भूत् भ्रान्त्या, स्वरूपज्ञानेनैव परमात्मनः सर्वज्ञताङ्गीकारात्। असङ्गत्वं तु तत्कृत-फललेपाभावमात्रम्। न च सम्बन्धविरह एव। 'यथाऽऽ-काशस्थितो नित्यं वायुः' इत्यादितथाविधदृष्टान्तोपादनात्।**

**तदिदमुक्तं 'अखिलसंवेत्तुः' इति । अत्र 'सम्' इत्युपसर्गेण भ्रान्त्या सर्वज्ञतां वारयति, ताच्छीलकतृन्प्रत्ययेन प्रमाण-जन्यतामिति स्वभावज्ञानेनैवोक्ता भवति ।**

**(मं.टि.)** शङ्कते ॥ नन्विति ॥ विमतः कदाऽपि किञ्चिद्विषयका ज्ञानवान्न भवति सदा सर्वज्ञत्वात् यो यदा यत्र ज्ञानवान् नासौ तदा तत्राज्ञानवान् यथोभयसम्मतः । विमता विषया वा कदापि न तदज्ञान-विषयाः सदा तज्ज्ञानविषयत्वात् यो यदा यज्ज्ञानविषयः नासौ तदा तदज्ञानविषयः यथोभयसंमत इत्यभिप्रेत्य सिद्धान्तयति ॥ मैवमिति ॥

शङ्कते ॥ नन्विति ॥ प्रमाणत इति ॥ अन्तःकरणवृत्त्येत्यर्थः ॥ भ्रान्त्या वेति ॥ ननु कथमेतत् ? भ्रान्तिर्हि विशेषाज्ञाननिबन्धना । विशेषाज्ञानं च सर्वज्ञस्य न सम्भवतीति चेन्न । विशेषज्ञानस्यापि भ्रान्तिरूपस्य स्थाणौ करचरणादिभ्रान्तेरिव भ्रान्त्यङ्गत्वात् । आद्ये अज्ञानावश्यम्भाव इत्याह ॥ कूटस्थस्येति ॥ कूटवत्तिष्ठतीति कूटस्थः निर्विकारः तस्येत्यर्थः । प्रमातृत्वं हि प्रमाश्रयत्वं । आश्रयाश्रयिभावश्च निर्विकारे न सम्भवतीति भावः । द्वितीयेऽप्यज्ञानमावश्यकमित्याह ॥ भ्रान्तेश्चेति ॥ तृतीयेऽप्यज्ञानं स्वीकर्तव्यमित्याह ॥ स्वरूपेति ॥ इति श्रुतेरिति ॥ सङ्गाभावः श्रुत्यर्थः इति मन्यते । परिहरति ॥ मैवमिति ॥ स्वरूपज्ञानेनेति ॥ ननु कथमेतत् ? स्वरूपज्ञानस्य अज्ञानस्फोरकत्वेन तद्विरोधित्वाभावात् । ततश्च 'यो यत्र ज्ञानवान् नासौ तत्राज्ञानवान्' इति व्याप्तौ वृत्त्यतिरिक्तस्य स्वरूपज्ञानस्यापि विवक्षायां व्यभिचारः । 'त्वदुक्तमर्थं न जानामि' इत्यत्र ज्ञायमान एव साक्षिणा त्वदुक्तेऽर्थे अज्ञानस्यास्माभिरङ्गीकारात् । वृत्तिमात्रविवक्षायां तु असिद्धिः । स्वरूपज्ञानेनैव सर्वज्ञत्वाङ्गीकारेण वृत्तेरभावादिति चेत् । मैवं । वृत्तिमात्रस्य विरोधित्वे परोक्षवृत्तेरप्यज्ञाननिवर्तकत्वप्रसङ्गात् । तच्च त्वया

'परोक्षवृत्त्याप्यज्ञाननिवृत्तौ अभिव्यक्तापरोक्षैकरसचैतन्यसंभेदेन अतीतादेर-परोक्षप्रसङ्गः' इति बाधकं पश्यता नाङ्गीक्रियते । अपरोक्षवृत्तिर्विरोधिनीति चेन्न । तथा सति श्रवणमात्रेणापरोक्षज्ञानं वदतस्तव श्रवणजन्यज्ञानेनैव अज्ञाननिवृत्तौ मननादिवैयर्थ्यापातात् । ननु स्फुरणपर्यवसायिनी वृत्तिरज्ञानविरोधिनी । श्रवणमात्रेण च मनननिदिध्यासनसम्पाद्या-सम्भावनाविपरीतभावनाप्रतिबन्धनिरासाभावेन स्फुरणपर्यवसायिनी वृत्ति-र्नोदेतीति चेत् तर्हि प्राप्ताप्राप्तविवेकेन स्फुरणापरपर्यायं स्वरूपज्ञानमेव निवर्तकमिति कथं सर्वज्ञस्याज्ञानम् । अपि च वृत्तेरज्ञानोपादेयत्वात् उपादानोपादेययोश्च विरोधाभावात् विरोधस्य च निवर्त्यनिवर्तकभाव-प्रयोजकत्वात् न कुत्रापि वृत्तिरज्ञानविरोधिनी । एवं च 'त्वदुक्तमर्थं न जानामि' इत्यादौ स्वरूपज्ञानाङ्गीकारे तदपि पक्षतुल्यमिति कुतो व्यभिचारः ? इत्यलम् ।

॥ न च सम्बन्धेति ॥ सम्बन्धाभावपरत्वे व्याप्तत्वव्याघातः । युगपत्सर्वसम्बन्धित्वस्य व्याप्तत्वात् । न च महत्परिमाणाश्रयत्वं व्याप्तत्वम् । त्वया ब्रह्मणि परिमाणानङ्गीकारात् । न च देशपरिच्छेदाभावो व्याप्तत्वम् असत्यतिव्याप्तेः । न ह्यसत् 'अत्रैव' इति देशविशेषेणावच्छिद्यते । न च सत्त्वे सतीति विशेषणीयम् । ब्रह्मण्यपि स्वरूपातिरिक्तसत्त्वानभ्युपगमात् । तत्तद्वस्तुसम्बन्धाभावे तस्यैवासम्भवाच्च । सर्वत्र विद्यमानत्वं व्याप्तत्वमिति चेन्न । सर्वत्र विद्यमानत्वे तत्सम्बन्धस्यावर्जनीयत्वादिति भावः । युक्त्यन्तरमप्याह ॥ यथेति ॥ ताच्छीलिकतृन्प्रत्ययेनेति ॥ 'आक्वेस्तच्छील-तद्धर्मतत्साधुकारिषु' इत्यधिकृत्य 'तृन्' इत्यनेन सूत्रेण विहितो यस्तृन्-प्रत्ययः तेनेत्यर्थः । यद्यपि 'विद्यतिर्विनद्' इत्यनिट्कारिकायां श्यना श्नमा च निर्देशात् विद सत्तायां विद विचारणे इत्यनिट्त्वोक्त्या विद ज्ञान इत्यस्य सेट्त्वज्ञापनात् 'वेदिता विद्यानां' इति प्रयोगाच्च ज्ञानार्थविवक्षायां

अखिलसंवेदितुः इति वक्तव्यम् । तथापि विद विचारण इत्यस्य अनिट्त्वेन परिगणनात् अनिट्कारिकायां 'विन्नवित्तौ विचारित' इति विचारणार्थस्या-निट्त्वेन प्रयोगाच्च विचारणार्थेन विदधातुना विचारसाध्यविशेषज्ञानस्य लक्षयितुं शक्यत्वात् अखिलसंवेत्तुः इति प्रयोगः साधुरिति द्रष्टव्यम् ।

**(श्री.टि.)** इत्यत्रेति । परमात्मा अज्ञानाश्रयो न भवति, सर्वज्ञत्वादि-त्यनुमाने अन्वयव्याप्तौ दृष्टान्तो नास्तीत्यर्थः । कुत इत्यत आह ॥ परमात्मनेति । तस्य च पक्षत्वादिति भावः । यत्राज्ञानाश्रयत्वं तत्र सर्वज्ञत्वाभाव इति व्यतिरेकव्याप्तावपि दृष्टान्तो नास्ति । कुत इत्यत आह ॥ अज्ञानाश्रयस्येति ॥ अन्यस्येति । परमातिरिक्तस्येत्यर्थः । जडस्य जीवस्य च अज्ञानकल्पितत्वेनाज्ञानाश्रयत्वायोगात् । यथोक्तम् ।

''आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो ना श्रयो भवति नापि गोचर'' ॥ इति ।

तथाचाज्ञानसिद्धौ तत्कल्पितजीवादिसिद्धिः । तत्सिद्धौ च तदाश्रिता-ज्ञानसिद्धिरित्यन्योन्याश्रयादिति भावः । तत्कथमिति । तथाच दृष्टान्ताभावेन व्याप्तिग्रहणायोगात् व्याप्तिग्रहणसापेक्षप्रमितिसाधकत्वाभावादनुमानं विरुद्ध-मिति भावः ।

''व्याप्तिग्रहणसापेक्षं प्रमितेः साधनं विदुः'' । अनुमानमिति वचनादिति ज्ञातव्यम् ॥ सामान्यव्याप्तेरिति । सामान्यव्याप्तौ च घटादिज्ञानवान् देवदत्तो दष्टान्तः । तथा च सामान्यव्याप्तिमूलकमिदं सामान्यतो दृष्टानुमानमिति भावः । अनुमाने विरुद्धत्वमाशङ्कते ॥ नन्वित्यादिना ॥ प्रमाण इति । अन्तःकरणवृत्त्येत्यर्थः । तस्या एव तन्मते प्रमाणत्वेन व्यवहारादिति ज्ञातव्यम् ॥ भ्रांत्यावेति । तथाच सर्वविषयकं ज्ञानं भ्रमरूपमित्याशयः । प्रमाणतः सर्वज्ञताङ्गीकारे परमात्मनः प्रमातृत्वं प्राप्तम् । तच्चाज्ञान-

सापेक्षमित्याह ।। कूटस्थस्येति । निर्विकारस्येत्यर्थः । कूटमव्याकृताकाशः । ''कूटं खठं विदलं व्योम संधिराकाश उच्यत'' इत्यभिधानात् । तद्वत् स्थितः कूटस्थः । सादृश्यं च निर्विकारत्वेनेति कूटस्थशब्देन निर्विकारत्वं लभ्यत इति ज्ञातव्यम् । द्वितीयेऽप्यज्ञानमावश्यकमित्याह ।। भ्रान्तेश्चेति ।। अज्ञानेति । अधिष्ठानाज्ञानविशेषादर्शनकार्यत्वादित्यर्थः । तृतीयेऽप्यज्ञानं स्वीकार्यमित्याह ।। स्वरूपप्रज्ञायाश्चेति । अज्ञानमन्तरेणेत्यर्थः । सङ्गतिः सम्बन्धः । असङ्गत्वात्प्रज्ञायाः ।। असङ्गो हीति । परमात्मनोऽसङ्गत्वे श्रुतिसिद्धे सति तत्स्वरूपभूतप्रज्ञाया अप्यसङ्गत्वं लब्धमेवेत्यर्थः । प्रमाणतः सर्वज्ञत्वं स्वभावसिद्धप्रज्ञया वेति प्रकारद्वयं अज्ञानसापेक्षमित्येतत्स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् । तच्चोभयं विनाऽविद्या सम्बन्धं नैव सिध्यतीति तदीयवचनसिद्धम् । भ्रांत्या सर्वज्ञत्वमप्यज्ञानसापेक्षमित्येतदपि भ्रांत्या सर्वज्ञताज्ञानं विना नैव हि सिध्यतीति तद्वाक्यसिद्धमिति ज्ञातव्यम् ।

ननु स्वरूपज्ञानेनैव परमात्मनः सर्वज्ञताङ्गीकारेऽशेषपदार्थसम्बन्धविरहरूपासङ्गत्वविरोध इत्यत आह ।। असङ्गत्वमिति ।। तत्कृतेति । शुभाशुभपदार्थसम्बन्धकृतपुण्यपापरूपफललेपाभाव एवेत्यर्थः ।। न तु सम्बन्धविरह इति । सम्बन्धविरहरूपत्वे व्याप्तत्वव्याघातः । युगपत्सर्वपदार्थसम्बन्धित्वस्यैव व्याप्तिपदार्थत्वात् । न च परममहत्परिमाणाश्रयत्वं व्याप्तत्वम् । त्वया ब्रह्मणि तदनङ्गीकारात् । न च देशपरिच्छेदाभावो व्याप्तत्वम् । असत्यतिव्याप्तेः । न च सत्वे सतीति विशेषणीयम् । ब्रह्मणि स्वरूपातिरिक्तसत्ताभावात् । न च सर्वत्र विद्यमानत्वमेव व्याप्तत्वम् । सर्वत्र विद्यमानत्वाङ्गीकारे तत्सम्बन्धस्यावर्जनीयत्वादिति भावः । तत्तत्फललेपाभाव एव परमात्मनोऽसङ्गत्वमित्यत्र ज्ञापकमाह ।। यथाकाशेति ।। तथाविधेति । लेपाभावरूपासङ्गत्वोपेतवायुरूपदृष्टान्तेत्यर्थः ।

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ।। इति ।

गीतावाक्ये परमात्मनः स्वस्यासङ्गत्वे वायुर्दृष्टान्ततया भगवता कृष्णेनाऽपादीयते । तत्र वायोरसङ्गत्वं नाम न तत्तत्पदार्थसम्बन्धविरहरूपम् । आकाशस्थितः सर्वत्रग इत्युक्तिविरोधात् । किन्तु तत्तत्पदार्थ सम्बन्धकृतलेपाभावरूपमेव । अतस्तद्दृष्टान्तेन भगवतोऽप्यसङ्गत्वमुक्त- रूपमेवेत्याशयः । प्रमाणजन्यज्ञानेन भ्रांत्या च सर्वज्ञत्वं विना स्वरूपज्ञानेनैव सर्वज्ञत्वं यदङ्गीकृतं तन्मूलोक्तमित्याह ।। तदिदमुक्तमिति । तदुपपादयति ।। अत्रेति ।। वारयतीति । समित्युपसर्गेण वेदनस्य प्रमाणरूपताया उक्तत्वादिति भावः ।। ताच्छीलिकेति । आक्वेस्तच्छीलतद्धर्मतत्साधुकारिष्वित्यधिकृत्य तृन्निति सूत्रेण विहितो यस्तृन्प्रत्ययस्तेनेत्यर्थः । तथा च तृन्प्रत्ययान्तेन संवेत्तृशब्देनेति यावत् । प्रमाणजन्यतां वारयतीति वर्तते ।। इति स्वभावज्ञानेनैवेति । इत्येवं प्रमाणज्ञानेन भ्रांत्या च सर्वज्ञत्वे निराकृते सति स्वरूपप्रज्ञयैव सर्वज्ञतोक्ता भवतीत्यर्थः ।

**(सत्य.टि.)** अज्ञानाश्रयस्येति । यत्र जीवे अज्ञानं प्रतीयते, तस्य सर्वज्ञभेदानङ्गीकारात् । 'यः अज्ञः, सः सर्वज्ञो न' इति व्यतिरेकव्याप्तिग्रहो न जीवे सम्भवतीति भावः ।

सामान्यव्याप्तेरिति । परेण घटज्ञातरि देवदत्ते घटाज्ञानानङ्गीकारात्, देवदत्तादिषु सामान्यव्याप्तिग्रह इति भावः ।

अज्ञानसम्भवं सर्वज्ञस्य शङ्कते नन्विति । 'सर्वविषयकज्ञानवान् यः स सर्वज्ञः' इत्युच्यते इत्यर्थः ।

प्रमाणतो वेति । सर्वं जानीयात् इति यत्, तत् प्रमाणतः सर्वविषयकविज्ञानम् । प्रमाणजन्यमिति यावत् ।

भ्रान्त्या वेति । सर्वस्य अपारमार्थिकत्वात् 'सर्वं भ्रान्तिकल्पितम्' इति वाच्यम्, सा च भ्रान्तिः ईश्वरस्य; इति सर्वज्ञकल्पकसर्वावगाहिविभ्रमवत्वात् 'सर्वज्ञः' इत्युच्यते । अस्य ज्ञानस्य भ्रान्तित्वं न प्रातिभासिकार्थविषयत्वेन, येन भ्रान्तेर्विशेषाज्ञानव्याप्तत्वात् 'भ्रान्त्या सर्वज्ञः' इत्ययुक्तं स्यात्; अपि तु व्यावहारिकार्थकल्पकत्वरूपं पारिभाषिकम् इति भावः ।

स्वभावसिद्ध्येति । सर्वावगाहिप्रज्ञात्मकत्वात् सार्वज्ञम् इति भावः । यद्यपि अस्मिन्पक्षे सर्वज्ञानवत्त्वरूपं सार्वज्ञ्यं न लभ्यत इति 'तिस्रश्चास्य विधाः सम्भवन्ति' इत्यनुपपन्नमिव आभाति, तथापि पररीतिमवलम्ब्य 'विशेषबलेन ज्ञानात्मकस्यापि ज्ञानवत्त्वं सम्भवति' इति भावेन तथोक्तमित्यदोषः ।

प्रमाणजन्यज्ञानेन सर्वज्ञस्य अज्ञानं विना अयोगे हेतुमाह कूटस्थतयेति । सर्वस्य आविद्यकत्वात्, आविद्यकार्थस्य अविद्याशून्यदर्शनायोग्यत्वस्य शुक्ति रजतादौ दर्शनात्, कूटस्थपरमेश्वरस्य अज्ञानमन्तरा आविद्यकार्थप्रमातृत्वा-योग इत्यर्थः । यदि अज्ञानमन्तरा (एव) आविद्यकार्थदर्शनं परमेश्वरस्य स्यात्, तर्हि विशेषज्ञानवानपि शुक्तिरजतादिद्रष्टा स्यात्, अविशेषात् ; इति भावः ।

भ्रान्त्या सर्वज्ञत्वस्य अज्ञानसापेक्षत्वे हेतुमाह भ्रान्तेश्चेति । शुक्ति-रजतादिभ्रान्तेः अज्ञानकार्यत्वदर्शनात्, विश्वकल्पकेश्वरभ्रान्तिरपि अज्ञान-कार्यमेव इति वाच्यम्, ततश्च कार्यं कारणं कल्पयिष्यति इति भावः ।

सवरूपप्रज्ञायाः अज्ञानभ्रान्तिसापेक्षत्वासाधनाय प्रतिजानीते स्वरूपेति । स्वरूपप्रज्ञायाः अज्ञानमन्तरा अशेषार्थैः विषयविषयिभाव(लक्षण): सम्बन्धो न सम्भवति इत्यर्थः ।

हेतुमाह असङ्गत्वादिति । सम्बन्धमात्रवधुरत्वात् इत्यर्थः ॥ (परस्य) यस्य सम्बन्ध एव नास्ति तस्य विषयविषयिभावलक्षणः सम्बन्धः कथं स्यात् । अज्ञाने त्वागते तस्य अघटितघटनासमर्थत्वात्, एवंविध्यापि विषय-विषयिभावः उपपद्यते; इति भावः ।

अत इति । अतः त्रिविध्यापि सार्वज्ञ्यस्य उक्तरीत्या अज्ञानसापेक्षत्वात् 'सर्वज्ञस्य अज्ञानं न घटते' इत्यनुपपन्नम् इति भावः ॥

मैवमिति । 'सर्वज्ञस्य अज्ञानमाक्षिपति' इति न वाच्यम् इत्यर्थः ।

मा भूदिति । 'माङि लुङ्' (सि. कौ. सू. क्र. २२१९पा. सू. क्र. ३-३-१७५) इति वचनात् लडर्थे लुङ् । प्रमाणतः सर्वज्ञत्वं नास्ति, भ्रान्त्या च सर्वज्ञत्वं नास्ति, अप्रामाणिकत्वात्; अज्ञानं विनैव स्वरूपप्रज्ञया अशेषार्थविषयिण्या सर्वज्ञत्वस्य प्रामाणिकैः अङ्गीकृतत्वात् इत्यर्थः ।

परोदाहृतश्रुतेः न सम्बन्धसामान्यशून्यत्वम् अर्थः, अपि तु अर्थान्तरमाह असङ्गत्वं त्विति ।

यथाऽऽकाशस्थित इति । अस्यार्थो न ज्ञातः ।

### जीवब्रह्मणोरुपाधिनिमित्तभेदशङ्का

**(टी.) शङ्कते**

## मूलम्— उपाधिभेदाद्घटत इति चेत्...॥

**उपाधिनिमित्तो भेद उपाधिभेदः । घटते अज्ञतेति सम्बन्धः । यदुक्तं 'ब्रह्मणोऽखिलसंवेत्तुरज्ञता न घटत, इति तन्न । अज्ञानस्य जीवाश्रयत्वाभ्युपगमात् । ननु जीवो ब्रह्मणो न भिद्यत इति ते**

**मतं । सत्यं, तथाप्युपाधिनिमित्तो भेदोऽस्त्येव । तत्र यथा सत्यपि बिम्बप्रतिबिम्बयोरैक्ये दर्पणाद्युपाधिनिमित्तभेदात् बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामता घटते एवं जीव-ब्रह्मणोः सत्यप्यभेदे ब्रह्मणः सर्वज्ञत्वेऽपि जीवस्याज्ञता घटत एव उपाधिभेदादिति ।**

(मं. टि.) उपाधिभेदात् सर्वज्ञस्याज्ञानं घटत इति शङ्कितं मूले । तदयुक्तमेव । उपाधीनामन्योन्यभेदेऽपि सर्वज्ञस्याज्ञानानुपपत्तेस्तदवस्थत्वात् इत्यत आह ।। उपाधिनिमित्त इति ।। नायमुपाधीनां भेद इति षष्ठीतत्पुरुषः । किं तर्हि ? मध्यमपदलोपी समासः । अथ वा उपाधेर्भेद इति पञ्चमीतत्पुरुषः । हेतौ पञ्चमी । यद्वा षष्ठीसमास एवास्तु । षष्ठ्यर्थश्च हेतुहेतुमद्भाव इत्यर्थः । जीवब्रह्मणोरुपाधितो भेदेऽपि कथं सर्वज्ञस्याज्ञानं ? इत्याशङ्क्य अभिप्रायमाह ।। यदुक्तमित्यादिना ।। नन्वैपाधिकभेदसद्भावेऽपि स्वाभाविकाभेदेन जीवस्य सर्वज्ञता किं न स्यात् ? इत्यत आह ।। तत्रेति ।। उपाधितो भेदे सतीत्यर्थः । औपाधिकधर्मिभेदमात्रेणौपाधिकसार्वज्ञादि-व्यवस्थोपपत्तेः स्वाभाविकधर्मव्यावस्थायाश्चानङ्गीकारान्न स्वाभाविक-भेदापेक्षेति भावः ।

(श्री.टि.) ननूपाधीनां परस्परं भेदेऽपि सर्वज्ञस्य कथमज्ञानमुपपद्यते । व्यधिकरणत्वादित्यत आह ।। उपाधिनिमित्त इति । अत्रोपाधिरन्तःकरणादि रिति ज्ञातव्यम् ।। जीवाश्रयत्वेति । वाचस्पतिपक्षोऽयमिति ज्ञातव्यम् ।। ब्रह्मणो न भिद्यत इति । तथा च ब्रह्मण्येवाज्ञानमङ्गीकृतं स्यात् । तथा चोक्तदोषस्तदवस्थ एवेति भावः ।। अस्त्येवेति । जीवब्रह्मणोरिति शेषः । नन्वौपाधिकभेदसद्भावेऽपि जीव एवाज्ञानं कस्मादङ्गीक्रियते । ब्रह्मण्येव किं न स्यादित्यत आह ।। तत्रेत्यादिना । तत्रौपाधिकभेदे सति ।।

अवदातत्वेऽपीति । निर्मलत्वेऽपीत्यर्थः ॥ श्यामता घटत इति । उपाधेः प्रतिबिम्बपक्षपातित्वादिति भावः ॥ उपाधिभेदादिति । अन्तःकरणाद्युपाधेरपि प्रतिबिम्बभूत जीवपक्षपातित्वादिति भावः ।

(सत्य.टि.) यदुक्तमिति । 'अखिलसंवेत्तुरज्ञता न घटते' इति यदुक्तम्; तन्न, कपिसंयोगिनो वृक्षस्य अवच्छेदकनिमित्तभेदेन संयोगाभावाश्रयत्ववत्, उपाधिनिमित्तभेदेन सर्वज्ञत्वाभावावच्छिन्नांशे अज्ञतासम्भवात्; इति भावः।

एतेन "मूले 'सर्वज्ञस्य अज्ञता न घटते' इत्युक्तत्वेन, टीकायाम् 'अज्ञानस्य जीवाश्रयत्व' कथनम् अनुपपन्नम्" इति परास्तम्, जीवाश्रितत्वाभ्युपगमस्य मूलोक्तसर्वज्ञत्वाज्ञत्वाज्ञत्वसामानाधिकरण्यघटनोपायत्वात् ॥

"ननु भवेत् संयोगिनोऽपि वृक्षस्य तदभाववत्त्वम्, अवच्छेदकभेदसद्भावात्; न जीवस्य अज्ञानमुपपद्यते, भेदाभावात्" इति शङ्कते नन्विति ।

**जीवाज्ञानवादिमायिमते अज्ञानोपाद्योर्भेदे अपसिद्धान्तानवस्थादोषौ**

**(टी.) तदिदं दूषयितुं पृच्छति**

**मूलम्— ...स स्वभावतः ॥ २ ॥ अज्ञानतो वा...।**

**स्यादपीदं जीवाज्ञानमतं यद्युपाधिरुपपद्येत । स एव विविच्यतां । किं स्वभावतः अकल्पित इति यावत् । अज्ञानतो वा कल्पितः इति शेषः । आद्यं दूषयति**

**मूलम्— ...द्वैतस्य सत्यता स्वत एव चेत् ।**

**तथा चापसिद्धान्तः स्यात् इति भावः । द्वितीयं निराकरोति**

मूलम्— अनवस्थितिरज्ञानहेतौ...॥

अज्ञानहेताविति तत्पुरुषो बहुव्रीहिश्च द्वावपि तन्त्रेण उपात्तौ। स इति प्रथमान्तं प्रकृतमपि अर्थात् इह सप्तम्यन्त सम्बद्धयते। अज्ञानस्य हेतौ उपाधौ अज्ञानहेतुके अङ्गीक्रियमाणे अनवस्थितिः स्यात्। सति खलु उपाधौ तद्भिन्नस्य जीवस्य अज्ञानं स्यात्। उपाधिश्च अज्ञाने सति स्यात् अज्ञानं च उपाधौ सतीति। नन्वेवमज्ञानोपाधिपरम्परैव स्यात् नानवस्था इति चेन्न। असिद्धविषयत्वेनानवस्थात्वात्। अज्ञानं प्रतीतिसिद्धं परम्परां कल्पयिष्यतीति चेन्न। आत्यन्तिकभेदेनैव तस्योपपत्तेः।

जीवाज्ञानवादिमायिमते अज्ञानोपाध्योर्भेदे अन्योन्याश्रयदोषः

स्यादेवं, यदि अज्ञानोपाधिव्यक्तिभेदः स्यात्। न चैवं, एकमेव अज्ञानं उपाधिश्च इत्यङ्गीकारादिति चेत् एवं तर्हि मा भूत् अनवस्था। अन्योन्याश्रयस्तु भविष्यति इत्याह

मूलम्— ...वाऽन्योन्यसिद्धिता ॥ ३ ॥

(टी.) वाशब्दो व्यवस्थितविकल्पे। अन्योन्येन सिद्धिर्ययो-स्तावन्योन्यसिद्धी तद्भावोऽन्योन्यसिद्धिता। अज्ञानोपाध्यो-रिति सम्बन्धः।

जीवाज्ञानवादिमायिमते अज्ञानोपाध्योर्भेदे चक्रकदोषः

ननूपाधेरज्ञाननिमित्तकत्वेऽप्यज्ञानस्य उपाधिहेतुकत्वाभावात् कथं इतरेतराश्रयः? भेद एव ह्युपाधिनिमित्तोऽङ्गीक्रियत इत्यताह-

## मूलम्— चक्रकापत्तिरथ वा...।

**अथ वा इत्ययं निपातसमुदायः पक्षान्तरद्योतकः । यद्यपि भेद एवोपाध्यधीन उक्तः तथापि उपाधिभिन्ने जीवेऽपि अज्ञान मङ्गीक्रियमाणं परम्परया उपाधिहेतुकं भवेत् इति नेतरेतराश्रयः शक्यसमाधानः । परम्परानाश्रयणेऽपि चक्रकमापद्यत एव । अज्ञानाधीन उपाधिः तदधीनो भेदः भिन्नाश्रयमज्ञानमिति । अथ वा अथशब्द एव पूर्वत्र सम्बद्ध्यते । वाशब्देन आत्मा-श्रयत्वादिकं पक्षान्तरे सूचयति ।**

**(मं.टि.)** ननु अज्ञानहेतौ इत्यत्र किं षष्ठीतत्पुरुषो विवक्षितः? किं वा बहुव्रीहिः? उभयं वा ? नाद्यद्वितीयौ । उपाध्यज्ञानयोः कार्यकारण-मावाभावेनानवस्थानवकाशात् । न तृतीयः । युगपदुभयविवक्षायोगादित्यत आह ।। अज्ञानहेताविति तत्पुरुषो बहुव्रीहिश्चेति ।। उभयविवक्षानुपपत्तिं परिहरति ।। तन्त्रेणेति ।। सकृदुच्चरितमनेकोपकारकं तन्त्रम् ।। स इतीति ।। स स्वभावतः इत्यतोऽनुषक्तस्य तच्छब्दस्य यथाश्रुतविभक्त्यङ्गीकारे अनन्वयात् 'सक्तून् जुहोति' इत्यादाविव विभक्तिविपरिणामः क्रियत इति भावः । उपाधेः कारणभूताज्ञानसापेक्षत्वेऽपि नाज्ञास्योपाधिसापेक्षत्वं भेदमात्र-सापेक्षत्वात् इत्याशङ्क्याह ।। सति खलूपाधौ तद्भिन्नस्येति ।। नानवस्थेति ।। बीजाङ्करादाविव उत्पत्तिज्ञप्तिप्रतिबन्धकत्वाभावेन नानावस्था दूषणमित्यर्थः। तत्र बीजाङ्कुरपरम्परा प्रामाणिकी । अत्र त्वज्ञानादिपरम्परा अप्रामाणिकी-त्यनवस्था दूषणमिति परिहरति ।। न सिद्धेति ।। कार्यमेवाज्ञानं कारणपरम्परां कल्पयिष्यतीति कथमप्रामाणिकत्वं ? इति शङ्कते ।। अज्ञानं प्रतीतिसिद्धमिति ।। परिहरति ।। नेति ।। आत्यन्तिकभेदाङ्गीकारेणैवाज्ञान-प्रतीतिर्निर्वाह्या । अन्यथा अनन्तोपाध्यादिव्यक्तीनां कल्प्यतया गौरवं

स्यादिति एवकारार्थः ॥ व्यवस्थितविकल्प इति ॥ उपाधिव्यक्तीनामज्ञानव्यक्तीनां च आनन्त्ये अनवस्था, उपाधिव्यक्तेरज्ञानव्यक्तेश्च एकैकत्वे अन्योन्याश्रय इति पक्षभेदेन व्यवस्थितयोर्दूषणयोर्विकल्पे वाशब्दो वर्तते । अनवस्थाया अनन्तव्यक्तिसापेक्षत्वात् अन्योन्याश्रयस्य च व्यक्तिद्वयसापेक्षत्वात् एकस्मिन्नेव पक्षे वैकल्पिकदूषणद्वयायोगादित्यर्थः ॥ अथ वा इत्यत्र निपातसमुदायः किं व्यवस्थितविकल्पार्थः ? किं वा अव्यवस्थितविकल्पार्थः । नाद्यः । 'उपाधौ सति तद्भिन्नस्य जीवस्याज्ञानं, अज्ञाने सत्युपाधिः' इत्यन्योन्याश्रयपक्ष एव 'उपाधौ सति भेदः, भेदे सत्यज्ञानं, अज्ञाने च सति उपाधिः' इति चक्रकाश्रयोक्तेः पक्षभेदाभावात् । न द्वितीयः। कोटित्रयसद्भावेन अन्योन्याश्रयविकल्पानुपपत्तेरित्यत आह ॥ यद्यपीत्यादिना ॥ व्यवस्थितविकल्पार्थ एव निपातसमुदायः । न च पक्षभेदभावः । परम्पराश्रयणपक्षे अन्योन्याश्रयः । तदनाश्रयणे च चक्रकापत्तिरिति पक्षभेदात् । अत एव अथ वेत्ययं निपातसमुदायः इति टीकायां पक्षान्तरशब्देन परम्परानाश्रयणपक्षो विवक्षित इति द्रष्टव्यम् । अथ वा उक्तविकल्पं अथशब्दोऽद्योतयत् । वाशब्दोऽनुक्तविकल्पार्थ इत्याह ॥ अथ वेति ।

**(श्री.टि.)** मूले स्वत एवेत्यस्य स्वभावत एवाकल्पितश्चेदित्यर्थः ॥ तथा चेति । द्वीति भाव प्रधानं तथा च द्वित्वसंख्यया इतं द्वीतं द्वीतमेव द्वैतं द्वितीयमित्यर्थः । तथा च द्वितीयस्योपाधेः सत्यत्वप्राप्त्याऽद्वैतभङ्गापत्तिः स्यात् । तथा चापसिद्धान्त इत्यर्थः ॥ तन्त्रेणेति । सकृदुक्तमनेकोपकारकं तंत्रं तेन तंत्रन्यायेनेत्यर्थः ॥ अर्थादिति । पूर्ववाक्यादनुवृत्तस्य स इत्यस्य यथाश्रुतप्रथमाविभक्त्यंतत्वे वाक्यार्थेऽन्वयायोगात्तदन्यथानुपपत्त्या सप्तम्यंतं सम्बध्यत इत्यर्थः । विग्रहद्वयमपि दर्शयति ॥ अज्ञानस्येति । अनवस्थामुपपादयति ॥ उपाधिश्चेति ।

ननूपाधेः कारणीभूताज्ञानसापेक्षत्वेऽपि नाज्ञानस्योपाधिसापेक्षत्वं तस्य भेदमात्रसापेक्षत्वादित्यत उक्तम् । सति खलूपाधाविति ।। नन्वेवमिति । उपाधेरज्ञानसापेक्षत्वेऽज्ञानस्य चोपाधिसापेक्षत्वे तस्याप्युपाधेः पुनरज्ञानसापेक्षत्वे अज्ञानोपाधिपरंपरैव स्यादित्यर्थः ।। नानवस्थेति । अनवस्थात्वेनदूषणं नेत्यर्थः । तथा च बीजाङ्कुरादाविवेयमप्यनवस्था न दोषायेति भावः । बीजाङ्कुरपरंपरा प्रामाणिकी । अतस्तत्रानवस्था न दूषणं अत्रत्वज्ञानोपाधिपरंपराऽप्रामाणिकीत्यनवस्था दूषणमेवेत्याशयेन परिहरति ।। नेति ।। असिद्धविषयत्वेनेति । अप्रामाणिकत्वेनेत्यर्थः ।। अनवस्थात्वादिति । अनवस्थात्वेन दूषणत्वादित्यर्थः ।। प्रतीतीति । अज्ञानस्याहमज्ञ इति साक्षिरूपप्रतीतिसिद्धत्वेन प्रामाणिकतया कार्यमेवाज्ञानकारणपरंपरां कल्पयिष्यतीति नास्याः परंपराया असिद्धविषयकत्वमित्यर्थः ।। आत्यंतिकभेदेनैवेति । जीवेश्वरयोरत्यंतपारमार्थिकभेदमंगीकृत्य जीवे असत्यभूताज्ञानप्रतीतिनिर्वाहोपपत्तौ सत्यां अनंतोपाध्यादिव्यक्तिपरंपराकल्पने गौरवं स्यादित्यर्थः ।। स्यादेवमिति । उक्तरीत्याऽनवस्थेत्यर्थः ।। एकमेवेति । अज्ञानमेकमेव जीवे तद्घटकोपाधिश्चैक एवेति व्यक्तिद्वयमेवाङ्गीकृतमित्यर्थः । उपाधिव्यक्तीनामज्ञानव्यक्तीनां चानन्त्येऽनवस्थोक्ता । तस्मिन्नेव पक्षे अन्योन्याश्रयश्चोच्यत इति वाशब्दात्प्रतीयते । अतो व्याख्याति । वाशब्द इति । उपाधिव्यक्तीनामज्ञानव्यक्तीनां चानंत्येऽनवस्थोक्ता । उपाधिव्यक्तेरज्ञानव्यक्तेश्चैकत्वे अन्योन्याश्रय उच्यत इति पक्षभेदेन व्यवस्थितयोर्दूषणयोर्विकल्पे वाशब्दो वर्तत इत्यर्थः।। अन्योन्येति । अज्ञानसिद्धौ तत्कल्पितोपाधिसिद्धिः तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थः ।। भेद एव हीति । यद्यप्यज्ञानसिद्धौ तत्कल्पितोपाधिसिद्धिरित्यंगीकृतम् । तथाप्युपाधिसिद्धावज्ञानसिद्धिरिति नांगीक्रियते । अज्ञानस्यापाधिकल्पितत्वानंगीकारात् । किंतु जीवब्रह्मभेद एव ह्युपाधिनिमित्तक इत्येवांगीक्रियते । अतो नान्योन्याश्रय

इत्यर्थः ॥ निपातसमुदाय इति । स्वरादिनिपातमव्ययमिति सूत्रात् । अथवेति निपातसमुदायोव्ययद्वयमित्यर्थः ॥ पक्षांतरेति । पूर्वोक्तपरंपराश्रयण-पक्षाद्यत्पक्षांतरं परंपरानाश्रयणरूपं तद्द्योतक इत्यर्थः । उक्त इत्यनंतरं नाज्ञानमिति शेषः ॥ परंपरयेति । भेदद्वारेत्यर्थः ॥ नेतरेतराश्रयः शक्यसमाधान इति । तथाचाज्ञानसिद्धौ तत्कल्पितोपाधिसिद्धिः । तत्सिद्धौ चोपाधिभिन्ने जीवेऽज्ञानसिद्धिरिति कोटिद्वयमभ्युपेत्य पूर्वोक्तान्योन्याश्रयो न शक्यसमाधानः । समाधानं कर्तुं परिहर्तुमिति यावत् । न शक्यः । अन्योन्याश्रयो भविष्यत्येवेत्यर्थः ॥ परंपरानाश्रयणेऽपीति । अज्ञानं भेदद्वारोपाधिहेतुकमित्यनङ्गीकारेऽ- पीत्यर्थः ॥ भिन्नाश्रयमिति । भिन्नो यो जीवः तदाश्रयमित्यर्थः । तथाचाज्ञानसिद्धौ उपाधिसिद्धिः । तत्सिद्धौ च भेदसिद्धिः तत्सिद्धौ च तद्भिन्ने जीवेऽज्ञानसिद्धिरिति चक्रकाश्रयो द्रष्टव्यः ॥ पूर्वत्रेति । चक्रकापत्तिरथेत्येवं पूर्ववाक्य एव संबध्यत इत्यर्थः । तर्हि वाशब्दो व्यर्थ इत्यत आह ॥ वाशब्देनेति ॥ पक्षांतर इति । अंतःकरणादिकमेव जीव ब्रह्मभेदहेतुभूतोपाधिरिति वाचस्पतिपक्षात्पक्षांतरे विवरणकारपक्ष इत्यर्थः।

**(सत्य.टि.)** अज्ञानहेतुकेऽङ्गीक्रियमाण इति । अज्ञानान्तरहेतुके अङ्गीक्रियमाणे इत्यर्थः । (उपलक्षणमेतत्) तदज्ञानम्, उपाध्यन्तरहेतुकम्, स उपाधिः अज्ञानान्तरहेतुकः, इत्येवम् अनन्तव्यक्तिस्वीकारे (इति द्रष्टव्यम्) अनवस्थेति भावः ।

उपाध्यज्ञानभेदरूपव्यक्तित्रयसद्भावात् नान्योन्याश्रयः, इति शङ्कते ननूपाधेरिति ।

परम्पराऽनाश्रयण इति । 'कुलालपितृवत् अन्यथासिध्द्या, अज्ञानं प्रति उपाधेः हेतुत्वानाश्रयणे' इत्यर्थः । (उपलक्षणमेतत् । नाज्ञानं भेदहेतुकम्, किन्तु भेदाधीनम्; इत्यङ्गीक्रियत इति द्रष्टव्यम् ।)

वाशब्देनेति । अत्र 'आत्माश्रयत्वम्' इत्यतःपरं 'न ब्रूमो वयं उपाधिभेदात् अज्ञानं इति येन अनवस्था (अन्योन्याश्रया)दिकं स्यात्; किन्नाम अज्ञानवशादेव अज्ञानम् इति ब्रूमः इति' इति उच्छिन्नम् । ततश्च एवं टीकावाक्यपाठः-

''वा'शब्देन आत्माश्रयत्वम् । न ब्रूमो वयम् 'उपाधिभेदात् अज्ञानं घटते' इति, येन अन्योन्याश्रयादिकं स्यात्; किन्नाम 'अज्ञानवशादेव अज्ञानम्' इति ब्रूमः, इति पक्षान्तरे सूचयति'' इति ।

**जीवाज्ञानवादिमायिमते अज्ञानोपाध्योरभेदे अपसिद्धान्तात्माश्रयदोषौ**

**(टी.) तत्रेयमाशङ्का । स्यादेतदन्योन्याश्रयादिकं यदि अन्तःकरणादिकं अज्ञानादन्यदेवोपाधितया अङ्गीक्रियते । न चैवम् । अज्ञानस्योपाधितया अङ्गीकारात् ।**

**नन्वविद्या किं सम्बन्धिनी भेदनिमित्तं । दर्पणादिद्रव्यगपि किं सम्बन्धि भेदनिमित्तं । मुखमात्रसम्बन्धि इति चेत् इहापि चित् सुखरूपमात्रसम्बन्धि अज्ञानं जीवब्रह्मभेदं करोति । स्वरूपमात्रसम्बन्धिनोऽप्यज्ञानस्य जीवभागपक्षपातिता दर्पणादिवत् युज्यत इति ।**

**तत्रापि वक्तव्यं तत् अज्ञानमज्ञानकल्पितं ? उत न ? इति। नेति पक्षे पूर्ववदपसिद्धान्तः । आद्ये त्वात्माश्रयः स्यादिति । नन्वज्ञानं जीवब्रह्मभेदश्चानादिरेव । किं नाम ? अज्ञानाधीन एवेति कथमात्माश्रयादिकं ? इति । मैवं । किञ्चिदुपकाराभावे तदधीनताया एव मृषात्वात् । तद्भावे**

**त्वात्माश्रयाद्यनिस्तारात् । उत्पत्तिज्ञप्त्योरिव प्रवृत्त्यादेरपि प्रतिबन्धेन तस्य दूषणत्वात् । बिम्बप्रतिबिम्बयोरभेदाभावस्यान्यत्रोपपादितत्वात् दृष्टान्तो निरस्त एव ।**

**(मं.टि.)** नन्वज्ञानमेव चेदुपाधिस्तर्हि तदेव भेदकं वाच्यम् । तथा च तत्किं असम्बद्धं भेदनिमित्तं ? उत सम्बद्धं ? आद्येऽतिप्रसङ्गः । द्वितीयं विकल्पयति ॥ नन्वविद्या किंसम्बन्धिनीति ॥ अविद्या जीवसम्बन्धिनी ब्रह्मसम्बन्धिनी वा ? नोभयमपि । तद्विभागस्य अविद्याऽधीनत्वादिति किंशब्दार्थः । दर्पणादिद्रव्यमपि किं बिम्बसम्बन्धि भेदनिमित्तं ? किं प्रतिबिम्बसम्बन्धि ? नोभयमपि । तद्विभागस्य उपाधिसम्बन्धाधीनत्वादिति गूढाभिसन्धिः परः परिहरति ॥ दर्पणादीति ॥ चिन्मात्रसम्बन्ध्यज्ञानं भेदनिमित्तमिति गूढाभिसन्धिरभिप्रायं विवरितुं शङ्कते ॥ मुखमात्रेति ॥ अभिप्रायं विवृणोति ॥ इहापीति ॥ दर्पणादिवद्युज्यत इति ॥ उपाधेः प्रतिबिम्बपक्षपातिवत्स्वाभाव्यादित्यर्थः ॥ पूर्ववदपसिद्धान्त इति ॥ अज्ञानस्यानिर्वचनीयत्वं वदता तस्याप्यर्थादज्ञानकल्पितत्वाभ्युपगमादिति भावः । यद्वा अज्ञानस्य कल्पितत्वं वदता तस्यानादित्वे कल्पितत्वायोगात् सादित्वे वाच्ये उपादानान्तराभावात् अज्ञानोपादानकत्वस्य अर्थादङ्गीकृतत्वादिति भावः । अथ वा अज्ञानस्य कल्पितत्वं वदता अन्तःकरणादेरिव अज्ञानस्याधिष्ठानचैतन्यावरणं विना कल्पनायोगात् अज्ञानं च विना आवरणान्तराभावात् अज्ञानकल्पनापि अज्ञानाधीनेत्यर्थादङ्गीकृतत्वादिति भावः । आद्यं दूषयति ॥ आद्ये त्वात्माश्रयः स्यादिति ॥

एतेनैतदपि निरस्तं, यथा भवतां भेदो भेदान्तरमन्तरेणैव भिन्नः एवमज्ञानमज्ञानान्तरमन्तरेणैव कल्पितम् । यथोक्तं,

भेद्यं च भेद च भिनत्ति भेदो यथैव भेदान्तरमन्तरेण ।
मोहं च कार्यं च भिनत्ति मोहस्तथैव मोहान्तरमन्तरेण ॥ इति ।

अज्ञानान्तरानपेक्षणेनानवस्थाया अभावेऽपि आत्माश्रयापरिहारात् । न च भेदः प्रतिबन्दी । न हि यथा त्वया अज्ञानेतराध्यासः अज्ञानसापेक्षः अज्ञानाध्यासस्तु तन्निरपेक्ष इति स्वीक्रियते तथा मया स्वरूपभेदवादिना घटादौ भिन्नत्वं भेदान्तरसापेक्षं भेदे तु तन्निरपेक्षमित्यङ्गीक्रियते । किं नाम ? सर्वत्र निरपेक्षमिति । तथा च त्वयापि तद्वदेव अन्तःकरणाध्यासोऽपि अज्ञाननिरपेक्ष इत्यङ्गीकार्यं स्यात् । तथा चापसिद्धान्त इत्यलम् ।

शङ्कते ॥ नन्विति ॥ चशब्देन अज्ञानकार्योपाधेरपि प्रवाहतोऽनादित्वमुक्तम् । किं नामेत्यत्र अज्ञानशब्देन तदुपादानकोपाधिरपि विवक्ष्यते ॥ अज्ञानाधीन एवेति ॥ यथा अज्ञानसम्बन्धस्य 'षडस्माकमनादयः' इत्युक्तत्वेन अनादित्वेऽप्यज्ञानाधीनत्वं सम्बन्धस्य सम्बन्धिनिरूप्यत्वात् तद्वत् जीवब्रह्मविभागोऽपि अनादिरपि अज्ञानाधीन इत्यर्थः । कथमात्माश्रयादिकम् ? इत्यत्र प्रकृतार्थे दूषणमिति शेषः । विभागस्याज्ञानाधीनत्वं तत्कृतोपकाराभावे न सम्भवतीत्युपकारो वक्तव्यः । स च नोत्पत्तिः । अनादित्वेनैव त्वया अङ्गीकारात् । नापि ज्ञप्तिः । अज्ञानाद्यप्रतीतावपि 'अहमन्यः' इति विभागप्रतीतेरित्याह ॥ किञ्चिदुपकाराभाव इति ॥

एतेन सम्बन्धप्रतिबन्ध्यपास्ता । सम्बन्धप्रतीतेः सम्बन्धिप्रतीतिसापेक्षत्ववत् विभागप्रतीतेः अज्ञानप्रतीतिसापेक्षत्वाभावात् । अथ द्रव्यत्वगुणित्वयोरिवानादित्वेऽपि प्रयोज्यप्रयोजकभावोऽङ्गीक्रियते । तत्र यथा गुणित्वस्य द्रव्यत्वाधिकरणनियामकत्वात् तत्प्रयोजकत्वं एवं प्रकृतेऽपि अज्ञानादेर्विभागाधिकरणनियामकत्वात् तत्प्रयोजकत्वं । ततो विभागस्याज्ञानाधीनत्वमुपपन्नमिति तत्राह ॥ तद्भावे त्विति ॥ अस्माभिस्तु गुणित्वादेः कस्यचित् स्वतो नियताश्रयत्वमङ्गीक्रियते । न चैवं त्वया अङ्गीकर्तुं शक्यम् । अज्ञानादेरपि ब्रह्मण्यद्वितीये स्वतोऽसम्भवादिति भावः । ननु उत्पत्त्याद्यप्रतिबन्धकत्वात् नान्योन्याश्रयादि दूषणमित्यत आह ॥ उत्पत्तिज्ञप्त्योरिवेति ॥

प्रवृत्त्यादेरिति ।। अत्र आदिशब्देन नियमनं विवक्षितं । प्रवृत्तिग्रहणं तु दृष्टान्तार्थं । यथा स्वप्रवर्त्यस्य स्वप्रवर्तकत्वे स्वस्यैव स्वप्रवर्तकत्वे वा प्रवृत्तिप्रतिबन्धः एवं स्वनियम्यस्य स्वनियामकत्वे स्वस्यैव स्वनियामकत्वे वा नियमनप्रतिबन्धः स्यात् । येन आकारेण यत् यन्नियम्यं न तत् तेन आकारेण तन्नियामकं' इति व्याप्तेः नियम्यनियामकभावस्य भेदगर्भत्वाच्चेत्यर्थः ।

## जीवाज्ञानवादिमायिमते अज्ञानस्योपाधित्वे अनुपपत्तयः

किं च उपाधेरत्यन्तासतः चैतन्यसम्बन्धे अतिप्रसङ्गात् प्रातिभासिकत्वं वक्तव्यं । न च तद्वक्तुं शक्यं । प्रातिभासिकत्वस्य प्रतिभाससम्बन्धाधीनत्वेन अन्योन्याश्रयप्रसङ्गात् । अपि चायमुपाधिः किं केवलचैतन्यवेद्यः? किं वोपाधिभिन्नचैतन्यवेद्यः? नाद्यः आरोपितस्य यावत्प्रतीत्यनुवर्तननियमेन तदनुवृत्तिप्रसङ्गात् । न द्वितीयः । अन्योन्याश्रयात् । किं चायं घटादिः गगन इव ब्रह्मण्युयाधिः? । किं वा दर्पणादिर्मुख इव? यद्वा अङ्गुल्यवष्टम्भादिश्चन्द्र इव? अथ वा जपाकुसुमादिः स्फटिकादाविव ? नाद्यः । असङ्गस्याज्ञानेतरसम्बन्धाभाववत् स्वभावतोऽज्ञानसम्बन्धस्याप्यनुपपत्तेः। न द्वितीयः। आत्मनोऽतीन्द्रियस्य प्रतिबिम्बनासम्भवात् । अतीन्द्रियस्यापि प्रतिबिम्बने पर्वतगतगुरुत्वस्यापि आदर्शे प्रतिबिम्बनेन आदर्शस्यानुद्धार्यत्वप्रसङ्गः । नापि तृतीयः प्रमेयसम्बन्धित्वेन त्वया अङ्गीकारात् । करणासम्बन्धित्वाच्च । न चतुर्थः स्वगतधर्मानुपसङ्क्रामकत्वात् । न हि जपाकुसुमादौ रक्तत्वमिवाज्ञानादौ दुःखाद्यनुसन्धातृत्वमस्ति । किञ्च औपाधिक इति कोऽर्थः । किमुपाधिकृत इति ? किं वा उपाधिज्ञापित इति ? नाद्यः सत्वाविरोधेन मयाऽपि तदङ्गीकारात् । द्वितीयेऽपि किं विद्यमान एव ज्ञाप्यते ? किं वा अविद्यमानप्रतिभासमात्रं क्रियते ? नाद्यः इष्टापत्तेः । न द्वितीयः प्रमेयसम्बन्ध्युपाधेः तदभावस्य वक्ष्यमाणत्वात् । किं च अयं विभागः किं सादिः ? उत अनादिः ? नाद्यः मुक्तस्य संसारप्रसङ्गात् । न

द्वितीयः । अध्यस्तत्वायोत् । न हि स्वरूपेणानादिरध्यस्यते । अन्यथा ब्रह्मणोऽपि तथाभावः प्रसज्येत । यच्चोक्तमुपाधेः प्रतिबिम्बपक्षपातित्वमिति तन्न । तथात्वे बिम्बस्थानीयब्रह्मगतसर्वज्ञत्वादेरनुपाधिकत्वापातात् ।

## चैतन्यमात्रस्याज्ञानसम्बन्धानुपपत्तिः

किं च चैतन्यमात्रस्याज्ञानसम्बन्धः किमौपाधिकः ? किं वा स्वाभाविकः ? आद्यऽनवस्थादिः । द्वितीये आनन्दादिवदनिवृत्तिप्रसङ्गः । किं च न मुखमात्रवत् चैतन्यमात्रमस्ति । ब्रह्मादिभावस्यानादित्वात् ।

मुक्तावपि 'ब्रह्म वेद ब्रह्मैव भवति' इति ब्रह्मत्वस्यानपायश्रवणात् । अन्यथा उपचरितार्थत्वप्रसङ्गात् । किं च स्फुरणस्यैव अज्ञानविरोधित्वो-पपादनात् कथं चैतन्यस्याज्ञानसम्बन्धः । अपि च वक्ष्यमाण आकाशस्य उपाधिसम्बन्धनिरासप्रकारोऽत्रापि द्रष्टव्य इत्यलं प्रपञ्चेन ।

चैत्यमात्रस्याज्ञाननिरासप्रपञ्चस्तु

मोहं तत्साधकः साक्षी साधयेदहमो यदा ।
अज्ञोऽहमिति केन स्याच्चिन्मात्रस्याज्ञता तदा ।।

इत्यादिना अन्यत्रास्माभिः कृतो द्रष्टव्यः । अज्ञानस्यैव प्रतिफलनार्हत्व लक्षणोपाधित्वपक्षे दूषणान्तरमाह ।। बिम्बेति ।। ततश्चोपाधेः प्रतिबिम्ब-पक्षपातित्वस्वभावकल्पनं चाप्रामाणिकमिति भावः ।

**(श्री.टि.)** पक्षान्तरमेव दर्शयति ।। तत्रेयमांशंकेति । अंतःकरणादि कमित्यत्रादिपदेन देहंद्रियग्रहणम् । नन्वज्ञानस्यैवोपाधित्वे तस्यावश्यं भेदनिमित्तत्वं वाच्यम् । तत्रासंबद्धस्यैव भेदनिमित्तत्वेऽतिप्रसंगात्संबद्धस्यैव भेदकत्वे वाच्ये किं प्रतिबिम्बभूतं जीवं सम्बध्य भेदं करोति । उत प्रतिबिम्बभूतं ब्रह्मेत्याशयेन सिद्धान्ती शङ्कते । नन्वविद्येति । उपाधिभूत

दर्पणादि द्रव्यस्यापि मुखभेदनिमित्तत्वं तावदस्ति । तत्रासंबद्धस्य भेद-कत्वेति प्रसङ्गात् संबद्धस्यैव भेदकत्वे वाच्ये किं बिम्बभूतं मुखं संबद्धश्च भेदं करोति । उत बिम्बभूतं ब्रह्मेत्याशयेन सिद्धांती शङ्कते ।। नन्वविद्येति । उपाधिभूतदर्पणादिद्रव्यापि मुखप्रतिमुखभेदनिमित्तत्वं तावदस्ति । तत्रा-संबद्धस्य भेदकत्वेतिप्रसंगात् संबद्धस्यैव भेदकत्वे वाच्ये किं बिम्बभूतं मुखं संबध्य भेदं करोति । उत प्रतिबिम्बभूतं प्रतिमुखं तत्र यदुत्तरं तदेव ममापीत्याशयेन मायावादी परिहरति ।। दर्पणादिद्रव्यमपीति । सिद्धांती गूढाभिसंधिरुत्तरमाशंकते ।। मुखमात्रेति । दर्पणादिद्रव्यं बिम्बभूतं मुखमात्रमेव संबध्य भेदनिमित्तं भवति । न यत्किंचिद्धटादिकं संबध्येति मात्रशब्दार्थः । एवं सिद्धांत्यभिप्रेतं मात्रशब्दार्थमज्ञात्वा मायावादी बिम्बप्रतिबिम्बभूतमुखप्रतिमुखानुस्यूतं मुखमात्रं मात्रशब्देनोक्तं सिद्धांतिनेति मत्वोत्तरमाह ।। इहापीति ।। चित्स्वरूपमात्रेति । बिम्बप्रतिबिम्ब-भूतजीवब्रह्मानुस्यूतचिन्मात्ररूपस्वरूपमात्रेत्यर्थः । यथोक्तं विवरणकारेण ।

''आश्रयत्व विषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर ।।'' इति ।

ननु जीवब्रह्मानुस्यूतचिन्मात्ररूपस्वरूपमात्रं संबध्याज्ञानं स्वकार्य-दुःखादिकं बिम्बे कस्मान्न दर्शयतीत्यत आह ।। स्वरूपमात्रेति । उपाधेः प्रतिबिम्बपक्षपातित्वस्वाभाव्येन स्वभावस्यानपायादित्यर्थः । तत्र दृष्टान्तो दर्पणादिवदिति । यथा मुखप्रतिमुखानुस्यूतमुखमात्रं संबध्यापि दर्पणादिकं स्वकार्यमालिन्यादिकं प्रतिमुख एव प्रदर्शयति । नान्यत्र तद्वदित्यर्थः । इतीयमाशंकेत्यन्वयः ।। तदज्ञानमिति । उपाधिभूतमज्ञानमित्यर्थः ।। पूर्ववदिति । अंतःकरणाद्युपाधेर- ज्ञानाकल्पितत्वाङ्गीकारे सत्यत्वप्राप्त्याऽ-द्वैतभङ्गापत्त्याऽपसिद्धान्त उक्तः । तद्वदज्ञानरूपोपाधेरपि अज्ञाना-कल्पितत्वाङ्गीकारेऽपसिद्धान्त इत्यर्थः । स्यादितीत्यस्यात्माश्रयत्वं पक्षान्तरे

सूचयतीत्यनेनान्वयो द्रष्टव्यः । चिन्मात्राश्रिताज्ञानवादी जीवाश्रिताज्ञानावादी च शङ्कते ।। नन्वज्ञानमिति ।। अनादिरेवेति ।

जीव ईशो विशुद्धा चिद्भेदस्तस्यास्तयोर्द्वयोः ।
अविद्या तच्चितोर्योगः षडस्माकमनादय ।।

इति वचनादिति भावः ।। आत्माश्रयादिकमिति । दूषणमिति शेषः । अज्ञानस्यानादित्वेनाज्ञानकल्पितत्वाभावान्नात्माश्रयः । जीवब्रह्मविभागस्याप्यनादित्वेऽज्ञानकल्पितत्वाभावान्नन्योन्याश्रयोऽपीत्यादिशब्दार्थः । तथाचोत्पत्तिज्ञप्त्यप्रतिबंधकत्वान्नत्माश्रयादिप्रसंगो दूषणमिति भावः ।। किंचिदुपकारेति । उत्पत्तिज्ञप्तिरूपोपकारेत्यर्थः ।। मृषात्वादिति । तथाचाज्ञानाधीन एवेत्युक्तमसदिति भावः । नन्वज्ञानस्यानादित्वेनाज्ञानेनोत्पत्त्यभावेऽपि अज्ञानप्रयुक्तत्वाङ्गीकारान्नात्माश्रयः । तथानादित्वेऽपि द्रव्यत्वगुणवत्त्वयोः प्रयुत्त्यादावन्योन्याधीनत्वसद्भावेऽपि यथा नान्योन्याश्रयः एवमज्ञानस्यजीवब्रह्मविभागस्य चानादित्वेनोत्पत्त्यादावन्योन्याधीनत्वाभावेऽपि प्रयुत्त्यादावन्योन्याधीनत्वाङ्गीकाराच्चान्योन्याश्रयोऽपीत्याशंक्याह ।। सद्भावेत्विति । प्रयुक्तिरूपोपकारसद्भावे त्वित्यर्थः ।। आत्माश्रयेति । उपपादयति ।। उत्पत्तीति । प्रयुत्त्यामेवेति शेषः । तथा चाज्ञानस्याज्ञानप्रयुक्तत्वाङ्गीकारे प्रयुत्त्यामेवात्माश्रयः स्यादित्यर्थः । आदिपदेनान्योन्याश्रयादिग्रहणम् । तथा हि । द्रव्यत्वजातेर्व्यंग्यभूतायाः गुणित्वरूपव्यंजकप्रयुक्तत्वेऽपि न व्यञ्जकस्य व्यंग्यप्रयुक्तत्वम् । व्यंग्यस्य घटादेः स्वज्ञानादौ आलोकरूपव्यंजकप्रयुक्तत्वेऽपि व्यंजकस्यालोकस्य घटादिप्रयुक्तत्वाभावादिति न तत्रान्योन्याश्रयः । इह तु जीवब्रह्मविभागस्याविद्याप्रयुक्तत्वाद- विद्यायाश्च जीवाश्रितत्वाज्जीवाज्ञाने अन्योन्यप्रयुक्ते इति प्रयुक्तिप्रतिबंधकत्वादन्योन्याश्रयः स्यादेव । यथोक्तम् ।

''अविद्याजीवयोर्यत्र ह्यपेक्षा तन्निरोधकः ।
अन्योन्याश्रयो नोचेदन्योन्याधीनताक्षतिरि''ति ।

ननूत्पत्तिज्ञप्तिप्रतिबंधकात्माश्रयादेर्दोषत्वम् । न तु प्रयुक्त्यादि-प्रतिबंधकात्माश्रयादेरित्यत आह ।। उत्पत्तिज्ञप्त्योरिवेति । आदिपदेन प्रयुक्तिर्गृह्यते । प्रवृत्तिग्रहणं दृष्टान्तार्थम् । यथा हि स्वस्यैव स्वप्रवर्तकत्वे तत्प्रवर्त्यस्यैव तत्प्रवर्तकत्वे वा प्रवृत्ति- प्रतिबंधादात्माश्रयादिकम् । एवं स्वस्यैव स्वप्रयोजकत्वे स्वप्रयुक्तस्य स्वप्रयोजकत्वे वा(स्व)प्रयुक्ति-बंधकत्वादात्माश्रयादिकं भविष्यत्येव । यथोक्तम् । यद्युत्पत्तिज्ञप्तिमात्र प्रतिबंधेन दोषता । तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकमिति । आरोहणादिकमित्यत्र युगपदिति शेषः । आदिपदेन स्वस्कंधारोहणग्रहणम् । एवञ्चाज्ञानस्याज्ञानप्रयोजकत्वे जीवब्रह्मविभागप्रयुक्तस्याज्ञानस्य जीव-ब्रह्मविभागप्रयोजकत्वे चात्माश्रयादिकं भविष्यत्येवेति भावः ।। यथा सत्यपि बिम्बप्रतिबिम्बयोरैक्ये दर्पणाद्युपाधिनिमित्तभेदात् बिम्बस्यावदातत्वेऽपि प्रतिबिम्बस्य श्यामता घटत इत्युक्तं दृष्टान्तमपि दूषयति ।। बिम्ब-प्रतिबिम्बयोरिति ।। अन्यत्रेति । तत्वनिर्णयटीकादावित्यर्थः । तथाहि । बिम्बप्रतिबिम्बयोरैक्ये न तावत्प्रत्यक्षं मानम् । इमे चैत्रतच्छाये भिन्ने इतिवत् इमे चैत्रतत्प्रतिबिम्बे भिन्ने इत्येवं पार्श्वस्थेन ग्रहणात् । स्वेनापि मद्देहतत्प्रतिबिम्बे भिन्ने इत्येव ग्रहणाच्च । सूर्यस्य पार्श्वे प्रतिसूर्य इतिवद्दर्पणे मम मुख छायेत्येवानुभवेन दर्पणे मम मुखं लग्नमिति कस्यापि प्रतीत्यभावाच्च । प्रतिबिम्बमेव दृष्टं न चैत्र इत्यनुभवायोगाच्च । प्रतिमुखे प्रत्यङ्मुखत्वादिना दृश्यमानेऽपि मुखे तद्बुध्यभावाच्च । क्वचित्प्रतिमुखे मम मुखमिति व्यपदेशस्तु स्वछायाशिरसि स्वशिरोव्यवहारवत् मार्गविन्यस्त-पादादौ स्वपादव्यवहारवच्च गौणः । भेदज्ञाने सत्यभेदव्यवहारस्य गौणत्वनियमात् । किञ्च बिम्बप्रतिबिम्बयोर्भेदसाक्षात्कारे तावन्न विवादः । अन्यथा त्वयापि कस्य भ्रमत्वमुच्यते ।

न च भेदं भेदकं च साक्षात्कुर्वन् अभेदमपि साक्षात्कुर्वन् दृष्टः । ननु चैत्रो यत्स्वलक्षणो बहिः प्रतिपन्नस्तत्स्वलक्षण एव वेश्मांतस्थितो भाति । तथा च यत्स्वलक्षणं ग्रीवास्थं मुखं तत्स्वलक्षणमेव दर्पणस्थमपि भाति । न च तद्वस्त्वंतरत्वे युज्यते । तस्मादेकमेकदेशस्थं च मुखं भ्रान्त्या भिन्नं भिन्नदेशस्थं च भातीति चेत् । उच्यते । किमनेन बिम्बप्रतिबिम्बयोरैक्ये तदेवेदं मुखमिति प्रत्यभिज्ञाप्रत्यक्षमुपन्यस्तम् । उत बिम्बप्रतिबिम्बे अभिन्ने अत्यन्तसदृशत्वादिति सादृश्यलिङ्गकानुमानम् । नाद्यः । असिद्धेः । किञ्चित्स्वच्छताम्रादौ प्रतीते मुखसंस्थानविशेषाप्रतीत्या प्रत्यभिज्ञाभावस्य स्पष्टत्वात् । आदर्शप्रतीते स्वनेत्रगोलकादौ स्वस्याभिज्ञाया एवाभावेन प्रत्यभिज्ञायोगाच्च । नापि द्वितीयः । सव्येतरकरादौ व्यभिचारात् । वैधर्म्याभावो लिङ्गमस्त्विति चेन्न । प्रत्यक्पराग्भावादिरूपविरुद्धधर्मस्यैव सद्भावेनासिद्धेः । मुखे चलिते सति प्रतिमुखं चलतीति क्रियासाम्यं लिङ्गमस्त्विति चेन्न । छायादावनैकान्त्यात् ।

ननु प्रतिबिम्बं बिम्बाभिन्नं बिम्बकारणमात्रत्वादित्यनुमानमस्त्विति चेन्न । बिम्बादर्वाचीने प्रतिबिम्बे तस्यासिद्धेः । बिम्बजननेन चरितार्थानां कारणानां कालान्तरीयप्रतिबिम्बजनकत्वाङ्गीकारे विरम्यव्यापारप्रसङ्गात् । पृथग्दृष्ट-कार्यानुरोधेन परिवेषेंद्रचापच्छायाप्रतिसूर्यादाविव कारणस्य कल्प्यत्वात् । एतेन दर्पणादौ न प्रतिमुखरूपं व्यक्त्यंतरमस्ति कारणशून्यत्वाच्छशमस्तके विषाणवदिति निरस्तम् । उक्तरीत्या कारणस्य कल्प्यत्वेनासिद्धेः । एतेनाभिज्ञायां भेदो भाति । प्रत्यभिज्ञायां त्वभेदः । तत्र भेदधीः प्रतिमुख-रूपव्यक्त्यंतरे हेत्वभावेनोपपत्तिहीनत्वाद्भ्रान्तिः । अभेदधीस्तु सोपपत्ति-कत्वात्प्रमेति निरस्तम् । अभेदधीरेव नास्तीत्युक्तत्वात् । च्छायादाविव कारणस्य कल्प्यत्वेन भेदबुद्धेः सोपपत्तिकत्वाच्च । एतेन—

''दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम् ।
व्याप्नुवंत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखमि''ति निरस्तम् ।

परावृत्य स्वमुखस्यैव ग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगात् । शिलाद्यभिहतनेत्रस्यापि स्वमुखग्राहकत्वापाताच्च । अस्यां प्रक्रियायां स्वच्छताया अनुपयोगात्। अथ नापि

''नेक्षेतोद्यंतमादित्यं नास्तं यंतं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसोगतमि''ति

स्मृतिरेव बिम्बप्रतिबिम्बैक्ये मानम् । उद्यदादित्यादौ बिम्ब इव वारिस्थमादित्यमिति वारिस्थेऽपि प्रतिबिम्बे आदित्यशब्दप्रयोगादिति चेन्न। अस्य स्मार्तव्यवहारस्य गौणत्वात्। व्यपदेशमात्रस्य भेदप्रत्यक्षबाधकतायां आदित्यो यूप इत्यादावपि प्रसङ्गात् । त्वत्पक्षेऽपि हि वारिस्थशब्दो न मुख्यः। गगनस्थस्य वारिस्थत्वायोगात् । वारिस्थसूर्यदर्शननिषेधे तयो-रभेदादाकाशगतसूर्यदर्शनस्यापि निषिद्धत्वप्रसङ्गाच्च।

किञ्च बिम्बप्रतिबिम्बयोरैक्ये अयं प्रदेशो बिम्बवान् प्रतिबिम्बवत्त्वादिति प्रतिबिम्बाद्बिंबानुमानं न स्यात्। साध्यावैशिष्ट्यापातात्।

ननु तर्हि बिम्बप्रतिबिम्बयोर्भेदे प्रतिबिम्बे किं कारणमिति चेत्। अत्र ब्रूमः । बिम्बरूपमुखसंनिधिवशादादर्श एव प्रतिमुखगर्भितः परिणमते । तथा चादर्श एवोपादानकारणं बिम्बसन्निधानं निमित्तमिति । ननु तर्हि बिम्बसन्निधिलब्धपरिणतिविशेषो बिम्बसन्निध्यपाये अवतिष्ठेत । न हि निमित्तकारणनाशात्कार्यनाशोऽस्तीति चेन्न । यथा बिम्बसन्निधिरादर्शस्य प्रतिबिम्बाकारपरिणतौ हेतुः एवं तदपायोऽप्यादर्शस्य विपरीताकारपरिणतौ हेतुः । विपरीतपरिणतौ तु प्रतिबिम्बगर्भितता नश्यत्येव । यथा हि । सुवर्णरजतादीनां तुषमुषाग्निसंयोगादिना लब्धमेव द्रवावस्थानं तदपाये पुनर्घनीभावस्तथाऽत्रापीति। ननु निमित्तकारणनाशात्कार्यनाशो न दृष्ट इति चेन्न। यथा लोके समवायिकारणभूततंतुनाशात्कार्यभूतपटनाशो दृष्टः। यथा

विकल्पान्हृदि निधायाद्यं दूषयति ।। न तावदिति । सुखदुःखादि रूपधर्मभेदोऽन्यथानुपपत्त्या धर्मिणोर्जीवब्रह्मणोर्जीवानां च भेद इत्ययुक्तम् । धर्मभेदे धर्मिभेद इति नियमस्यायुक्तत्वादित्याह ।। धर्मभेदेऽपीति । रूपादिधर्मभेदेपि धर्मिणो घटस्यैकत्वेन व्यभिचारादित्यर्थः । द्वितीयं निराचष्टे ।। नापीति । भिन्नाश्रया देवदत्तयज्ञदत्तादिरूपभिन्नाश्रया ये धर्माः सुखदुःखादयः तद्भेदो व्यवस्था । तेन धर्मिणां भेदसिद्धिरित्यर्थः । रूपादीनां भिन्नाश्रयत्वाभावान्नोक्तदोष इति भावः ।। इतरेतरेति । धर्मिणां भेदसिद्धौ धर्माणां भिन्नाश्रयत्वसिद्धिः । तत्सिद्धौ च भिन्नाश्रय-धर्मभेदाद्धर्मिभेदसिद्धिरितीतरेतराश्रयप्रसङ्गादित्यर्थः । तृतीयं प्रत्याचष्टे ।। न च विरुद्धेति ।। एकात्म्येति । विरोधो नाम सहानवस्थानम् । जीव-ब्रह्मैक्यवादिमते सुखदुःखयोरैकात्म्यनिष्ठत्वस्यैव सद्भावेनोक्तरूपविरोधस्यैवा भावादित्यर्थः । एतेनेत्युक्तं विशदयति ।। सुखदुःखादीति । तथा च सुखदुःखाद्यनुसंधानभावाभावरूपव्यवस्थान्यथान्ययानुपपत्त्या जीवब्रह्मणो-र्जीवानां च भेदसाधनं युक्तमेवेत्याशयः ।।

एतदिति । सुखदुःखादीत्यर्थः ।। किमंशानामिति । जीवब्रह्मणोः स्वाभाविकैक्ये परस्परं सुखदुःखाद्यनुसंधानं स्यादित्यापाद्यमानानुसंधानं किमंशानां जीवानामापाद्यते उतांशिनो ब्रह्मण इत्यर्थः ।। व्याप्त्यभावादिति । यत्र स्वाभाविकैक्यं तत्रांशानां परस्परं सुखदुःखाद्यनुसंधानमिति व्याप्त्यभावादित्यर्थः । तमेवोपपादयति ।। हस्तगतेति । हस्तावच्छेदेन ज्ञायमानस्य सुखस्येत्यर्थः । पादगतेनांशेन । तथा च हस्तपादगतयोरंशयोः स्वरूपैक्ये सत्यपि परस्परं सुखदुःखाद्यनुसंधानाभावाद्व्यभिचार इत्यर्थः । ननु तत्राप्यस्ति परस्परं सुखदुःखाद्यनुसंधानमिति न व्यभिचार इति चेन्न । तत्राप्यनुसंधानाङ्गीकारे हस्ते मे सुखं पादे मे दुःखमिति नियतावच्छेदक-प्रतीतिरनुपपन्ना स्यात् । किं तर्हि उभयत्रोभयं प्रतीयेत । तथा च पादोपि

सुखावच्छेदकः स्यात्। हस्तोपि दुःखावच्छेदकः स्यादिति भावः। तस्येति। स्वरूपैक्ये अंशिनो ब्रह्मणः सुखाद्यनुसंधानं नापादयितुं शक्यते। अनुसंधानं नाम भोगः। अंशिनश्च भोगापादनं न युक्तम्। आनन्दरूपस्य तस्य बाह्यसुखादिभोगसाधनीभूतांतःकरणाद्यभावेनाभोक्तृत्वादित्यर्थः। नन्वंशानामापाद्यत इति पक्षे पादे मे सुखमित्यादि- नियतावच्छेदक(ताक)प्रतीतिर्न स्यादित्यत आह॥ न हीति। संक्रान्तिस्साधारण्यम्। स्वानवच्छेद्यस्याप्यवच्छेदकत्वमिति यावत्। कर्मणि षष्ठी। स्वेनानवच्छेद्यं प्रतीत्यर्थः। पादानवच्छेद्यसुखं प्रति पादोपि अवच्छेदकः स्यादित्यर्थः। ततश्चायमर्थः। ब्रह्मांशानां देवदत्तयज्ञदत्तादीनां स्वरूपैक्ये परस्परं सुखदुःखाद्यनुसंधानं स्यादित्यापाद्यस्य यज्ञदत्तोपाधिर्देवदत्तीयसुखावच्छेदकोपि स्यात्। देवदत्तोपाधिश्च यज्ञदत्तीयसुखावच्छेदकोपि स्यादिति यद्यर्थो विवक्षितः स्यात्तदा परमुक्तो व्यभिचारः संगच्छते। न चैवम्। किन्तु तत्तदुपाधिगतचैतन्यस्यैव तत्तदवच्छिन्नसुखाद्यनुसंधानं स्यादिति। तच्च हस्तपादगतांशयोरप्यस्त्येव। अन्यथा पादतललग्नकंटकोद्धरणाय हस्तव्यापारो न स्यात्।

ननु पुत्रादिसुखपरिजिहीर्षया कृपया पित्रादेः प्रवृत्तिवदुपपन्न इति चेन्न। पित्रादिप्रवृत्तौ पुत्रादिदुःखज्ञापकतदीयाक्रंदनादिरूपज्ञापकसद्भावादत्र तदभावदिति संप्रदायः। अन्ये तु। स्वरूपैक्ये अंशानामनुसंधानं स्यादिति विकल्पस्यायमभिप्रायः। यदांशानामनुसंधानमापाद्यते तदा हस्तरूपांशं प्रति पादगतजीवांश आयातीत्यङ्गीकार्यम्। अन्यथा हस्तगतांशनिष्ठसुखानुसंधानं विप्रकृष्टस्य पादगतांशस्य न स्यात्। तथा च यदा पादगतांशो हस्तगतांशं प्रति समायाति तदा तस्य स्वायतनं पादं विहायागमनासंभवादायतनभूतः पादोप्यायातीत्यङ्गीकार्यम्। तथा च तत्तद्भोगायतनानां परस्परमितरांशसम्बन्धप्राप्त्यानुसंधानं स्यादिति। व्याप्त्यभावमेवोपपादयति॥

हस्तगतस्येति । हस्तावच्छिन्नांशगतस्येत्यर्थः । पादगतेन पादावच्छिन्नांशेन । हस्तस्वरूपांशं प्रत्यागत्येति शेषः । आद्यपक्षे दोषाभावमुपपादयति ।। न हीति । संक्रान्तिरितरांशसम्बन्धः । उक्तरीत्या संक्रान्त्यापादनपूर्वकमनुसंधानं नापाद्यत इत्यर्थ इत्याहुः ।। अस्त्येवेति । अन्यथा पादतललग्नकंटकोद्धाराय हस्तव्यापारो न स्यादित्यर्थः । अंशिनोऽनुसंधानमापाद्यत इति द्वितीय-पक्षेऽपि न दोषः । ननूक्तं किल तस्याभोक्तृत्वादिति । तन्न । स्वरूपै-क्येंऽशिनः सुखादिभोगो नापादयितुं शक्यते । तस्याभोक्तृत्वात् । तथा च बाध इति हि तवाभिप्रेतम् । तदयुक्तम् । यदि वयं स्वरूपैक्येनांशिनो ब्रह्मणः सुखादिभोगं साधयामः । तदा परं बाधाभिधानं संगच्छेत । न चैवम् । किंत्वापादयामः । तत्र च बाधोऽलंकार एवेति परिहारे स्थितेऽपि प्रतिवादिस्खलितं नोपेक्षामर्हतीत्याशयेन तस्याभोक्तृत्वादित्युक्तम् दूषयति ।। भोक्तृभूतेति । अंशांशिनोरभेदेनांशानां भोक्तृत्वेन तादृशांशवतस्तदभिन्नस्येति यावत् । अंशिनोऽभोक्तृत्वमेवासिद्धमित्यर्थः ।

ननु यदि स्वरूपैक्यं स्यात्तदा सुखाद्यनुसंधानं स्यादित्यत्रापाद्यमानं सुखाद्यनुसंधानं नाम सुखादेर्वर्तमानतयानुभवः । तथा स्मरणं वा वक्तव्यम् । नान्यत् । तथा चात्मनोऽतीतसुखानुभवः । स्मरणं वा तावदिदानीं जायते । तत्र व्यभिचारः । प्रतीतसुखानुभवितुरात्मनः स्वरूपैक्ये सत्यपि अतीत-सुखादेर्वर्तमानतयानुभवस्मरणयोरभावाद्व्यभिचार इत्याशयेन शङ्कते ।। अतीतसुखादाविवेति ।। ब्रूम इति । येन व्यभिचारः स्यादिति भावः । तर्ह्यनुसंधानशब्दार्थो वक्तव्य इत्याशङ्कते ।। किं नामेति । उत्तरमाह ।। स्वीयतयेति । तथा चातीतसुखादावपि स्वसत्तासमये स्वीयतयानुभव-सद्भावान्न व्यभिचार इति भावेनाह ।। न च तदिति । अतीतसुखादौ तत् । स्वीयतयानुभवमात्रं नास्तीति न किंत्वस्त्येवेत्यर्थः । वर्तमानतयेत्यस्य व्यावृत्त्यर्थो मात्रशब्दः । फलितं दर्शयति ।। तदयमिति । एकपदं चैतत् । स

चासावयं चेति तदयं सोयमित्यर्थः । यद्वा तदिति भिन्नं पदम् । तस्मादित्यर्थः ॥ प्रसङ्गार्थ इति । प्रसङ्गरूपस्य सुखादुःखादिभोगश्चेति वाक्यस्यार्थ इत्यर्थः । यत्र स्वाभाविकोऽभेदः तत्र स्वगतसुखादिविषये स्वीयतयानुभववत्त्वमिति व्याप्तिमभिप्रेत्य तत्र दृष्टान्तमाह ॥ यथा संप्रतिपन्न इति । संप्रतिपन्न एकात्मा देवदत्त इत्यर्थः । तत्र स्वेन स्वाभाविकैक्यमस्ति । स्वगतदुःखादिविषये स्वीयतयानुभवोप्यस्तीति द्रष्टव्यम् । व्यतिरेकव्याप्तिं दर्शयति ॥ यो येनेति ॥ संप्रतिपन्न इति । संप्रतिपन्नैकात्मा देवदत्तः स्वयं स्वेनैक्यवान्स्वगतसुखाद्यनुसंधानवांश्च भवतीत्यर्थः ॥ सूचितमिति । सुखदुःखादिभोगो भेदेन दृश्यत इत्यनेन सुखाद्यनुसंधानशून्यत्वं न दृश्यत इत्यनेन सुखाद्यनुसंधानं सूचितमित्यर्थः । ननु घटस्य घटेनैक्ये विद्यमानेपि सुखाद्यनुसंधानाभावाद्व्यभिचार इत्यत आह ॥ चैतन्यावच्छिन्नत्वादिति । तथा च चेतनत्वे सति यो येनैक्यवानिति व्याप्तेरभिप्रेतत्वाद्घटे व्यभिचाररूपक्षुद्रोपद्रवो नास्तीत्यर्थः ।

**(सत्य.टि.)** न तावद्धर्मभेद इति । धर्मभेदः व्यवस्थाशब्दवाच्यो न भवति इत्यर्थः ।

धर्मभेदेऽपीति । रूपरसात्मकधर्मभेदे विद्यमानेऽपि, धर्मिभेदाभावात् धर्मभेदः धर्मिभेदसाधको न भवति; इत्यर्थः ।

नापीति । 'व्यवस्था' इत्यनुवर्तते ।

अङ्गीकृतत्वादिति । आत्मभेदसाधकत्वेन अङ्गीकृतत्वात् इत्यर्थः ।

सुखदुःखादिभोगस्य भेदेन दर्शनं न स्यात् इत्युक्तौ परस्पर-सुखदुःखानुसन्धानं स्यात् इत्यापादनं लब्धम् इति सिद्धवत्कृत्य शङ्कते नन्वेतदिति ।

व्याप्त्यभावम् उपपादयति हस्तगतेति । जीवैक्यलक्षणापादके विद्य-मानेऽपि, हस्तगतांशस्य यत् सुखम् तस्य पादगतांशेन पादा-वच्छिन्नतया अननुसन्धानेन व्यभिचारः; इति भाव ।

तस्येति । अशिनो ब्रह्मणः अभोक्तृत्वात्, तस्य अनुसन्धानापादनं न युक्तम्; इत्यर्थः । भोक्तृत्वावच्छिन्नस्य ऐक्यं यत्र तत्र अनुसन्धानम् इति व्याप्तेः । प्रकृते च विशिष्टापादका(ना)भावात्) न आपादनम् उचितम्, इति भावः ।

'हस्तगतसुखस्य पादगतेन अननुसन्धानात्' इत्यनेन उक्तं व्यभिचारं परिहर्तुम् आपाद्यस्वरूपम् आह न हीति । न अस्माभिः, तत्तद्भोकायतनानां देवदत्तादिसर्वदेहानाम्, संक्रान्तिः साम्यम्, 'यस्य दुःखस्य देवदत्तदेहः अवच्छेदकः, तस्यैव यज्ञदत्तादिदेहाः पादावच्छिन्नतया अनुसन्धानं पादगतस्य नास्ति, इति व्यभिचारोद्भावनं सङ्गच्छेत । न च एवम्, किन्तु अनुसन्धानमात्रम् । तच्च पादादिगतांशानाम् अस्त्येव, इति न व्यभिचारः, इति भावः ।

द्वितीयपक्षोक्तं दोषम् उद्धरति भोक्तृभूतेति । भोक्तृत्वावच्छिन्नस्य ऐक्यस्य भावात्, आपादनम् उचितम् इति भावः ।

## 'स्वरूपैक्ये अनुसन्धानं स्यात्' इति तर्के उपाधिशङ्का

**(टी.) ननु दृष्टान्तस्थले अनुसन्धानस्य उपाधिभेदाभावः प्रयोजकः, न तु स्वरूपैक्यमात्रं प्रकृते तु उपाधिभेदसद्भावात् कथमनुसन्धानप्रसङ्गः?**

### सिद्धान्त्युक्तानुमाने अप्रयोजकत्वाशङ्का

**(टी.) कथं च अन्यनिमित्तस्य अनुसन्धानस्याभावात् स्वरूपैक्याभावानुमानं इति ।**

### पूर्वोक्तशङ्कापरिहारः

अत आह-

## मूलम्— ...उपाधिभेदेऽपि... ।

**पूर्ववाक्येन सम्बन्धः । अनेन अनुसन्धानं प्रति उपाधिभेदाभावो न प्रयोजकः । किं नाम ? स्वरूपैक्यमेव' इत्युक्तं भवति । तत्कुतो ज्ञायते ? इत्यत आह**

## मूलम्— ...हस्तपादादिगो यथा ।

**अस्यापि पूर्वेणैव सम्बन्धः । 'स्वरूपैक्ये सति हस्तपादाद्युपाधीनां भेदे सत्यपि अनुसन्धानदर्शनात् तदेव प्रयोजकं नोपाधिभेदाभावः' इति ज्ञायते । अन्यथा उपाधिभेदात् हस्तपादादिगतसुखादिभोग एकस्य न स्यात् । अतः 'उपाधिभेदेऽपि हस्तपादादिगतसुखादिभोगवत् स्वरूपैक्ये सर्वोपाधिगतोऽसौ भेदेन न दृश्येत' इति ।**

**(मं.टि.)** तर्कस्योपाधिं शङ्कते ।। नन्विति ।। उपाधिभेदाभाव एव चेत्प्रयोजकः तर्हि यज्ञदत्तशरीराविष्टपिशाचदुःखाद्युनुसन्धानं यज्ञदत्तस्य स्यादिति । तत्राह ।। न तु स्वरूपैक्यमात्रमिति ।। उपाध्यैक्यस्वरूपैक्ययोरुभयोरपि प्रयोजकत्वम् । अतो नोक्तदोष इत्यर्थः । उपाधेः साधना-

व्यापकत्वमाह ।। प्रकृत इति ।। अनुकूलतर्काभावादप्रयोजकं चानुमानमित्याह ।। कथं चेति ।। अन्यनिमित्तस्येति ।। उपाध्यैक्यावच्छिन्नस्वरूपैक्य-निमित्तकस्येत्यर्थः । नैमित्तकस्यानुसन्धानस्याभावो हि निमित्ताभावं कल्पयति । प्रकृते तु न स्वरूपैक्यमात्रं निमित्तम् । किं तर्हि ? विशिष्टमित्युक्तम् । विशिष्टाभावाश्चोपाध्यैक्याभावमात्रेणोपपद्यत इति स्वरूपैक्याभावानङ्गीकारे बाधकं नेति भावः ।

सिद्धान्तयतीत्याह ।। अत आहेति ।। न प्रयोजक इति ।। अन्वय-व्यतिरेकाभ्यां प्रयोज्यप्रयोजकभावस्य निर्णेतव्यत्वात् उपाध्यैक्यस्य व्यतिरेकव्यभिचारान्नाप्रयोजकमनुमानम् । नापि तर्कः सोपाधिकः । साध्यव्यापकत्वाभावादिति भावः ।

**(श्री.टि.)** तर्के उपाधिमाशङ्कते ।। नन्विति । दृष्टान्तस्थले संप्रति-पन्नैकात्मनि प्रयोजक उपाधिः । अनेन साध्यभूतापाद्यव्यापकत्वमुक्तं भवतीति द्रष्टव्यम् ।। नतु स्वरूपैक्यमात्रमिति । उपाधिभेदाभावविशिष्टं वस्तुस्वरूपैक्यमेवानुसंधाने प्रयोजकमित्यर्थः । उपाधिभेदाभावमात्रस्यैव प्रयोजकत्वे गर्भस्थस्यापि पितृमातृगतसुखाद्यनुसंधानापत्तिः स्यात् अतः स्वरूपैक्यमपि प्रयोजकम् । गर्भस्थस्य तु मात्रा स्वरूपैक्या-भावान्नानुसंधानमिति भावः । आपादकीभूतानुसंधानाव्यापकत्वं दर्शयति ।। प्रकृते त्विति । पक्षभूतेषु जीवेष्वित्यर्थः । अनुकूलतर्काभावान्नानुसंधानमिति भावः । परस्परं सुखाद्यनुसंधानशून्यत्वमस्तु । परस्परैक्यराहित्यं च मास्त्वित्यप्रयोजकं चानुमानमित्याह ।। कथं चेति ।। अन्यनिमित्तस्येति । उपाधिभेदाभवानिमित्तकस्येत्यर्थः । नैमित्तिकस्यानुसंधानस्याभावो हि निमित्ताभावं कल्पयति । प्रकृते त्वनुसंधाने न स्वरूपैक्यमात्रं निमित्तम् । किन्तूपाधिभेदाभावविशिष्टम् । तथा च नैमित्तिकस्यानुसंधानस्याभावेन कल्प्यमाननिमित्तरूपविशिष्टाभाव उपाधिभेदाभावेनैवोपपद्यत इति

स्वरूपैक्याभावानङ्गीकारे बाधकं किमपि नास्तीत्यप्रयोजकतेति भावः ॥ पूर्ववाक्येनेति । उपाधिभेदेपि सुखदुःखादिभोगो भेदेन न दृश्यः । सुखाद्यनुसंधानमस्तीति यावदिति पूर्ववाक्येन सम्बन्ध इत्यर्थः ॥ न प्रयोजक इति । सत्यप्यनुसंधाने उपाधिभेदाभावो नास्तीति व्यभिचारादित्यर्थः॥ तदिति । व्यभिचारात्प्रयोजको न भवतीत्येतत् कुतो ज्ञायत इत्यर्थः ॥ अस्यापीति । हस्तपादादिगो यथेति वाक्यस्यापि सुखदुःखादिभोगश्चेति पूर्ववाक्येनैव सम्बन्ध इत्यर्थः ॥ अन्यथेति । अनुसंधाने उपाधिभेदाभावस्यैव प्रयोजकत्व इत्यर्थः ॥

भोगानुसंधानं न स्यादिति । तथा चानुसंधाने सत्यपि उपाधिभेदाभावाद्व्यभिचार इत्यर्थः । उपाधिभेदेपि हस्तपादादिगो यथेत्येतत् । पूर्ववाक्येनैव सम्बन्धं दर्शयन्व्याख्यति ॥ अत इति ॥ सर्वोपाधीति । देवसत्तयज्ञदत्तादिसर्वोपाधीत्यर्थः । असौ सुखादिभोगस्तदनुसंधानमिति यावत् । तथा चानुसंधाने उपाधिभेदाभावस्य व्यभिचारेण प्रयोजकत्वाभावेन स्वरूपैक्यस्यैव प्रयोजकतया अन्वयव्यतिरेकाभ्यां च निर्णीतत्वादनुसंधानाभावेन परस्परं स्वरूपैक्याभावानुमानं नाप्रयोजकम् । नापि तर्कः सोपाधिकः । साध्यभूतोपाध्यव्यापकत्वादित्युक्तं भवतीति द्रष्टव्यम् ।

**(सत्य.टि.)** ननु दृष्टान्तस्थल इति । देवदत्त इत्यर्थः ।

पूर्ववाक्येनैव सम्बन्ध इति । उपाधिभेदेऽपि 'सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः । दृश्यो हि' इति पूर्वेण सम्बन्धः, इत्यर्थः । तद्वाक्यम् इह अनुवर्तते, इति भावः ।

अस्यापीति । उपाधिभेदेऽपि स्वरूपैक्यमात्रेण हस्तपादाद्यवच्छेदेन जायमानो भोगः यथा भेदेन न दृश्यः, तथा 'स्वरूपैक्ये न भेदतः दृश्यः' इति पूर्वेण सम्बन्धः, इत्यर्थः ।

एकस्य न स्यादिति । हस्तगतो भोगः पादगतस्य न स्यात्, पादगतो भोगः हस्तगतस्य न स्यात्; इत्यर्थः ।

### संश्लिष्टोपाधेरनुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

**(टी.) अथापि स्यात् । संश्लिष्टोपाधित्वमनुसन्धाने प्रयोजकम् । तदभावात् प्रकृते नानुसन्धानमिति चेत् किमुपाधिसंश्लेषमात्रं प्रयोजकम्? उत स्वरूपैक्ये सति ? नाद्यः मातृसुखादेर्गर्भस्थेनानुभवप्रसङ्गात् ।**

### स्वरूपैक्यविशिष्टसंश्लिष्टोपाधेरनुसन्धानप्रयोजकत्वशङ्कानिरासः

**न द्वितीयः स्वरूपैक्यमात्रस्य प्रयोजकत्वे सम्भवति विशेषणप्रक्षेपे प्रमाणाभावात् । दोषान्तरं च सूचयति**

**मूलम्— नानादेहगभोगानुसन्धानं योगिनो यथा ॥७॥**

**स्वरूपैक्यसद्भावात् विश्लिष्टनानादेहगतसुखाद्यनुसन्धानं सौभर्यादियोगिनो दृष्टमिति तदेवानुसन्धाने प्रयोजकं नोपाधिसंश्लेषोऽपीति ज्ञायते । अन्यथा योगप्रभावोत्पादितानेक शरीरगतसुखाद्यनुसन्धानं योगिनो न स्यात् । अतो योगिनः स्वरूपैक्यात् उपाधिषु विश्लिष्टेष्वपि यथा नानादेहगतसुखादि भोगानुसन्धानं तथा प्रकृतेऽप्यापाद्यत एवेति ।**

**(मं.टि.)** प्रयोजकस्य व्यतिरेकव्यभिचारपरिहारार्थं उपाधेः साध्यव्यापकतासिद्ध्यर्थं च उपाधिर्विशिष्यत इति शङ्कते ॥ अथापीति ॥ सिद्धान्ती तत्परिजिहीर्षुर्विकल्पयति ॥ किमुपाधीति ॥ आद्ये दूषणं

प्रतिजानीते ।। नाद्य इति ।। कोऽयमुपाधीनामन्योन्यसंश्लेषो नाम ? किं सम्बन्धमात्रम् ? किं वा उत्पत्तिमारभ्य सम्बन्धः ? यद्वा मिलित्वा एकावयव्यारम्भकत्वम् ? नाद्यः तस्य प्रकृतेऽपि सत्वात् । न द्वितीय इत्याह ।। मात्रमिति ।। अन्वयव्यभिचारस्य संश्लिष्टोपाधिरनुसन्धाने प्रयोजक इति नास्मदुक्तमनुमानमप्रयोजकम् । नापि तर्कः सोपाधिकः । 'यत्रानुसन्धानं तत्रोपाधिसंश्लेषः' इति साध्यव्यापकत्वेऽपि साध्याभावाविनाभूताभाव-प्रतियोगिनः स्वरूपैक्यस्य प्रयोजकत्वे सम्भवति साध्याभावाविनाभूता-भावरहितस्योपाधेरेवाप्रयोजकत्वम् । यथोक्तं,

> "'एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
> साध्याभावाविनाभावी स उपाधिर्यदत्ययः ।।''

इति भावः । उभयोत्पत्तिमारभ्य सम्बन्धो विवक्षित इति चेन्न । देवतावचनादिना मध्ये हस्ताद्युत्पत्तिदर्शनेन व्यभिचारात् । अनाश्यसम्बन्धो विवक्षित इति चेन्न । सति हस्ते पादच्छेददर्शनादिति भावः ।

स्वरूपैक्ये सति संश्लेषः प्रयोजक इति द्वितीयं दूषयति ।। न द्वितीय इति ।। दोषान्तरं सूचयतीति ।। यद्यपि उपाधिसंश्लेषविशिष्टस्वरूपैक्यस्य नानुसन्धानप्रयोजकत्वम् । योगिषु व्यतिरेकव्यभिचारादित्ययमर्थो मूलग्रन्थे मुखत एवोच्यते तथापि दोषान्तरत्वाकारेण सूच्यत्वम् । विशेषणप्रक्षेपे प्रमाणाभावादिति स्वेनोक्तस्याचार्येण सूचितत्वादिति भावः । अथ वा व्यभिचारस्थलस्य कथनेऽपि व्यभिचारः सूच्यत इति तात्पर्यम् । 'एकावयव्यारम्भकत्वं संश्लेषः' इति पक्षोऽप्यनेनैव योगिषु व्यतिरेक व्यभिचारकथनेन निरस्तो वेदितव्यः ।

## अन्तःकरणरूपोपाधिभेदाभावस्य अनुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

ननु अन्तःकरणरूपोपाधिभेदाभावोऽनुसन्धाने प्रयोजकः । एवं च चैत्रस्य हस्तपादादिभेदेऽपि अन्तःकरणभेदाभावात् योगिनोऽपि शरीर भेदेऽपि अन्तःकरणभेदाभावादनुसन्धानोपपत्तिः । देवदत्तयज्ञदत्तयोस्तु अन्तःकरणभेदादननुसन्धानम् । मातृगर्भस्थयोरपि अन्तःकरणभेदा-दननुसन्धानोपपत्तौ 'स्वरूपैक्ये सति' इति न विशेषणीयम् । तेन गौरवं च नास्तीति चेत्

नैष दोषः । सुप्तौ अन्तःकरणविलयमङ्गीकुर्वतस्तव मते प्रत्यह-मन्तःकरणभेदसद्भावेन 'पूर्वद्युर्मयादुःखमनुभूतं' इत्यनुसन्धानाभाव-प्रसङ्गात् । सुप्तमुक्तयोरन्तःकरणरूपोपाधिभेदाभावेन तयोः जाग्रत्संसार-सम्बन्धिदुःखाद्यनुभवप्रसङ्गाच्च । एकस्यैवाणुभूतस्यान्तःकरणस्य विप्रकृष्ट-देशस्थितानेकयोगिशरीरसम्बन्धासम्भवेन योगिनोऽपि अन्तःकरणभेद-सद्भावाच्च । अन्यथा देवदत्तयज्ञदत्तयोरप्यन्तःकरणैक्यप्रसङ्गात् ।

## अविद्यारूपोपाधिभेदाभावस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

ननु तर्ह्यविद्यारूपोपाधिभेदाभावः अनुसन्धाने प्रयोजकः । एवं च न दोषः, सुषुप्तावन्तःकरणविलयवत् अविद्याविलयाभावात् अविद्याया अन्तःकरणवदणुत्वाभावेन योगिन्यविद्याभेदाभावात् देवदत्तयज्ञदत्तादौ च अनेकजीववादे अविद्याभेदात् एकजीववादे तु व्यवस्थाया एवाभावादिति चेत् उच्यते, अविद्यारूपोपाधिभेदाभावस्यानुसन्धाने प्रयोजकत्वे मायो-पाधिकस्येश्वरस्य च ऐन्द्रियकसुखाद्यनुसन्धानं स्यात् ।

## अज्ञानरूपोपाधिभेदाभावस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

अज्ञानरूपोपाधिभेदाभावोऽनुसन्धाने प्रयोजक इति चेन्न । मायायां लोकेऽज्ञानपदाप्रयोगात् । न हि मायाविनमज्ञानिनमाचक्षते । न च मायावी

कस्यचिदर्थस्याज्ञानादैन्द्रजालिकं दर्शयति । किं तु ? ओषधिविशेषज्ञाना-देव। किं च मुक्तस्याज्ञानरूपोपाधिभेदाभावात् संसारिसम्बन्धिदुःखाद्यनु-सन्धानप्रसङ्गः ।

### अज्ञानरूपोपाध्यैक्यस्यानुसन्धानप्रयोजकत्वाशङ्का तन्निरासश्च

अज्ञानरूपोपाध्यैक्यमनुसन्धाने प्रयोजकमिति चेत् तर्हि मुक्तस्य स्वरूपसुखानुभवो न स्यात् । 'चैतन्यैक्येप्यन्तःकरणभेदात् अविद्याभेदाद्वा अननुसन्धानं' इत्यत्र मां प्रति दृष्टान्ताभावेन शरीरभेदवदन्तःकरणादि-भेदस्यापि चैतन्यैक्ये सति अनुसन्धानाप्रतिबन्धकत्वात् ।

### भोगायतनाभेदस्यानुसन्धानप्रयोजकत्वशङ्का तन्निरासश्च

एतेनैतदपि निरस्तं 'यथा खलु स्वकर्णपुटपरिच्छिन्ननभोभागसमवायि-शब्दोपलम्भेऽपि भागान्तरवर्तिशब्दानुपलम्भः तथा सुखदुःखप्रयत्नाद्यु-पलम्भानुपलभ्य व्यवस्थितिसिद्धेस्तत्कर्णशष्कुलीमण्डलावच्छिन्नस्य नभ-सस्तत्र तत्र श्रोत्रभाववत् तत्तद्भोगायतनावच्छेदलब्धजीवभावस्य तत्र तत्र भोगोपपत्तौ किमनेकात्मकल्पनादुर्व्यसनेन' इति ।

अव्याकृताकाशस्यास्माभिः श्रोत्रत्वानङ्गीकारात् । आकाशस्य स्वतः सांशत्वोपपादनाच्च । योगिनो भोगायतनभेदेऽपि भोगाव्यवस्थाया उक्तत्वाच्च । किं च यथा अनेकात्मवादे तत्तत्कर्णपुटस्य तत्तदीयत्वनियमः न तथैकात्मवादे तत्तद्भोगायतनस्य नियमोऽस्ति । तत्रा च स्वीयकर्णपुटद्वय-परिच्छिन्ननभोभागवृत्तिशब्दोपलम्भवदेकात्मवादे सर्वेषां भोगायतनानां स्वीयत्वात् सर्वभोगायतनपरिच्छिन्नात्मसम्बन्धिसुखदुःखाद्यनुभव एकैकस्य स्यादेवेत्यलम् ।

**(श्री.टि.)** संश्लिष्टोपाधित्वं उपाधिमत्त्वं विश्लिष्टोपाधिभेदाभाव इत्यर्थः ॥ प्रकृत इति । हस्तपादादिगतसुखाद्यनुसंधानमेकस्यात्मनो युक्तम् ।

संश्लिष्टोपाधित्वाद्विश्लिष्टोपाधिभेदाभावाज्जीवब्रह्मणोर्जीवानां च विश्लिष्टो-पाधिमत्त्वान्नानुसंधानमित्यर्थः । प्रयोजकमनुसंधाने ।। प्रसङ्गादिति । तत्रापि विश्लिष्टोपाधिभेदाभावसद्भावादित्यर्थः ।। दोषांतरं चेति । प्रयोजनाभाव एको दोषः स्वैरुक्तः । व्यभिचारूपदोषांतरं सूचयतीत्यर्थः । मूले व्यभिचार-स्थलोक्त्या व्यभिचारः सूचित इति भावः । तदेव स्वरूपैक्यमेव । उपाधिसंश्लेषः संश्लिष्टोपाधिभेदाभावः ।। अन्यथेति । विश्लिष्टोपाधिभेदा-भावस्यैवानुसंधानप्रयोजकत्व इत्यर्थः । ईश्वरे मनः प्रणिधानं योगः । न स्यादिति । विश्लिष्टोपाधीनामेव सत्वेन विश्लिष्टोपाधिभेदाभावाभावेन व्यभिचारादिति भावः । मूलं योजयति ।। अत इति । अनुसंधाने विश्लिष्टोपाधिभेदाभावस्याप्रयोजकत्वादित्यर्थः । यथेत्यनंतरं मूलेऽध्या-हार्यमाह ।। तथेति । देवदत्तयज्ञदत्ताभिधोपाधिषु विश्लिष्टेष्वपि सुखाद्यनु-संधानमापाद्यत एवेत्यर्थः ।।

(सत्य.टि.) दोषान्तरं च सूचयतीति । उपाधिसंश्लेषस्य प्रयोजकत्वे दोषान्तरं सूचयति इत्यर्थः । (अस्माभिरेको दोष उक्तः, अन्यं दोषं मूलकारः सूचयतीत्यर्थः ।

## योगिनो नानादेहगतभोगानुसन्धानस्यासिद्धिशङ्का तन्निरासश्च

**(टी.) स्यादेतत् । परबुद्धेरप्रत्यक्षत्वात् योगिनो नानादेहगतभोगानुसन्धानं कुतः सिद्धम् ? इत्यत आह**

**न चेद्भोगानुसन्धानं तदिच्छा योगिनः कुतः ।**

**(टी.) इच्छापूर्वं खलु योगिनोऽनेकशरीरोपादानं पुराणेषु पठ्यते । तत्र यदि योगिनोऽनेकशरीरगतसुखाद्यनुसन्धानं न स्यात् तदा तस्य तदिच्छैव न स्यात् । शरीरोपादानस्य**

**प्रयोजनान्तराभावात् । अप्रयोजनस्य प्रेक्षावता निवर्तिष्य-माणत्वात् । अतो ज्ञायते अस्त्यनुसन्धानमिति ।**

## योगिनो नानाशरीरग्रहणे अनुसन्धानातिरिक्तप्रयोजनाभावस्य असिद्धिशङ्का तत्परिहारश्च

**न च योगिनोऽविवेकिनः । येनानुसन्धानासाधनमपि देहबाहुल्यं तदर्थमिच्छन्तीति कल्पयामः ।**

**(म.टि.)** आक्षिपति ।। स्यादेतदिति ।। परिहरति ।। अत आहेति ।। योगिनः प्रवृत्तिः किमिच्छापूर्विका ? उत न ? आद्यः मूलग्रन्थेन दूषितः । द्वितीयं दूषयति ।। इच्छापूर्वकं खल्विति ।। इच्छापूर्वकमिति पक्षे किं सप्रयोजनं ? किं वा निष्प्रयोजनं ? आद्यं दूषयति ।। तत्रेति ।। तथा सतीत्यर्थः ।। ननु 'सप्रयोजनत्वेऽपि प्रयोजनमात्रमपेक्षते न तु सुखाद्यनु-सन्धानमिति नियमः' इति तत्राह ।। शरीरेति ।। द्वितीयं दूषयति ।। अप्रयोजनस्य चेति ।।

ननु 'प्रयोजनान्तराभावात्' इत्यसिद्धो हेतुः देहबहुत्वस्य वैभवार्थत्वा-दित्यत आह ।। न चेति ।। तदर्थमिति ।। तच्छब्देन योगिन इत्यत्र विशेषणत्वेन प्रकृतो योगः तपोजन्यापूर्वरूपो विवक्ष्यते । तस्यार्थः प्रयोजनं । देहबहुत्वविशेषणं चैतत् । वैभवार्थमिति शेषः । यद्वा बुद्धिस्थत्वात् तच्छब्देन वैभवं परामृश्यते । वैभवायेत्यर्थः । अतिप्रयाससाध्ययोगजन्यापूर्वस्य प्रेक्षावतां क्षुद्रफले व्ययीकरणानुपपत्तेरिति भावः ।

**(श्री.टि.)** कुतः सिद्धमिति । अस्माकं कुतः प्रमाणात्सिद्धमित्यर्थः ।। पुराणेष्विति । यथोक्तमाग्नेयपुराणे ।

सौभरिश्च महायोगी पंचाशज्जन्मसंस्मृतिम् ।
दिव्यज्ञानेन विज्ञाय भाविजन्मफलं पुनः ।
एकदैव फलं भुङ्क्त्वा पंचाशज्जन्मकर्मजम् ।
स्वेच्छयैव ततः शुद्धो राहुमुक्त इवोडुप इति ।

तस्य सौभर्यादियोगिनः ॥ तदिच्छैवेति । युगपदनेकशरीरगतसुखादि-भोगानुसंधानायानेकशरीरोपादानेच्छैवेत्यर्थः । प्रयोजनांतरेति । सुखाद्यनु-सन्धानव्यतिरेकेण प्रयोजनान्तराभावादित्यर्थः । निष्प्रयोजनमपि शरीरो-पादानमिच्छन्ति योगिन इति चेत्तत्राह ॥ अप्रयोजनस्येति ॥ अत इति । अनेकशरीरोपादानेच्छान्यथानुपपत्त्येत्यर्थः । ननु योगिनः सुखाद्यनुसन्धाना-साधनमपि देहबाहुल्यं सुखाद्यनुसन्धानार्थमिच्छन्ति विवेकज्ञानाभावादिति चेत्तत्राह ॥ न च योगिन इति । अविवेकिनो भ्रान्ताः ।

(सत्य.टि.) परबुद्धेरिति । प्रत्यक्षं तावत् न प्रवर्तते ॥ नाप्यागमः, उक्तार्थप्रतिपादकस्य आगमस्य अदर्शनात् । व्याप्तिग्रहाभावात्, अनुमान-स्यापि अभावः; इति भावः ।

### प्रकारान्तरेण प्रयोजनान्तराभावस्यासिद्धिशङ्का तत्परिहारश्च

**(टी.) अथोच्येत, न योगिनः अनेकशरीरोपादित्सया अनेकशरीरगतसुखाद्यनुसन्धानमेकस्य कल्पयितुं शक्यते देह-बाहुल्यार्थमेवेच्छोपपत्तेः । न च तस्य वैयर्थ्यादप्रयोजकत्वम् । कर्मक्षयाय भोगार्थत्वात् । भोगश्च विनाप्यनुसन्धानेन तत्र तत्र तद्गतांशैः शक्यते कर्तुमिति । तत्राह**

**मूलम्— अनुसन्धानरहितदेहबाहुल्यमन्यथा ॥ ८ ॥**

**सिद्धमेव हि तत्पक्षे विशेषो योगिनः कुतः ।**

**न योगिनः अनुसन्धानेन विना केवलदेहबाहुल्यार्थमेवेच्छेति कल्पयितुं शक्यते । तथा सति अनुसन्धानरहितदेहबाहुल्यस्य योगित्वेन विनापि विद्यमानत्वाद्योगिनोऽनेकशरीराधिष्ठातृत्वमिति विशेषो न स्यात् । अस्ति चासौ । तेन ज्ञायते 'न शरीरबाहुल्यमात्रायेच्छा योगिनः किं तु ? तद्गतभोगाद्यनुसन्धानार्था' इति । कथमयोगिनोऽपि शरीरबाहुल्यं सिद्धम् ? इत्यत उक्तं ।। तत्पक्ष इति ।। सर्वशरीरगतचेतनानां स्वभावतोऽभेदस्य परेणाङ्गीकृतत्वादिति ।**

(मं.टि.) 'प्रयोजनान्तराभावात्' इत्यस्य असिद्धिमाशङ्कते ।। अथेति ।। कल्पनं चासङ्गतिमित्याह ।। एकस्येति ।। जीवस्याणुत्वेन नानाशरीरगतसुखाद्यनुसन्धातृत्वानुपपत्तेरिति भावः । देहबाहुल्यं च न स्वरूपेण पुरुषार्थः । ततः कथं तस्य प्रयोजनत्वम् ? इत्यत आह ।। न चेति ।। स्वरूपेणापुरुषार्थत्वेऽपि पुरुषार्थान्तरसाधनत्वमस्तीत्याह ।। भोगार्थत्वादिति ।। ननु भोगो नाम किं सुखादिकमेव ? किं वा तदनुसन्धानं ? नाद्यः अननुसंहितस्यापि सुखस्य पुरुषार्थत्वे परसुखस्यापि पुरुषार्थत्वप्रसङ्गात् । द्वितीये सिद्धं नः समीहितमित्यत आह ।। कर्मक्षयायेति ।। अननुसंहितस्यापि सुखस्य संसारनिदानकर्मनाशकत्वेन पुरुषार्थत्वमिति भावः । ननु तथापि सुखादेर्ज्ञातैकसत्वादुत्पन्नं सुखं ज्ञायेतैवेति तत्राह ।। भोगश्चेति ।। अनुसन्धातुरंशिनः सर्वदेहव्यापित्वाभावात् अनुसन्धात्रभावबाधितत्वेन 'यत् सुखं तत् ज्ञातैकसत्' इति व्याप्तिर्नाङ्गीक्रियत इति भावः । तर्हि भोगश्च न स्यात् सानुसन्धातृकस्यैव शरीरस्य भोगायतनत्वादित्यत आह ।। तत्र तत्र तद्गतांशैरिति ।। अनुसन्धाने अंश्यपेक्षा सुखदुःखोत्पत्तिलक्षणभोगस्तु

अंशसन्निधानमात्रेण भवतीति भावः । अंशैरिति करणे तृतीया । करणत्वं च शरीरस्य भोगायतनताया उपपादकत्वादौपचारिकम् ।

## 'यत् सुखं तत् अनुसन्धीयत एव' इति व्याप्तिसमर्थनम्

नानाशरीरेष्वंशानामनङ्गीकारे निर्जीवशरीर इव भोगोऽपि न स्यात् । अंशानामङ्गीकारे अंश्यप्यङ्गीकर्तव्यः । न चाणुत्वविरोधः अणोरपि शक्त्या पादादिव्यापित्ववत् नानादेहव्यापित्वस्याप्युपपत्तेः । तेन विना अंशानामवस्थानायोगात् । तयोरेकत्वात् । योगे वा पादादाविव अंशद्वारा अंशी चानुसन्दधीत । तथाच 'यत्सुखमुत्पन्नमविनष्टं च तदनुसन्धीयत एव' इति व्याप्तेर्बाधकाभावत् अन्यकर्मफलस्य चान्योनानुसन्धातुमशक्यत्वात् तस्यैवानुसन्धानं सुस्थम् ।

## सुखादिरूपभोगस्यानुसन्धानानङ्गीकारे योग्ययोगिनोरविशेषापादनसमर्थनम्

अपि चानुसन्धानाभावेऽपि कर्मक्षयार्तत्वेन भोगः सार्थकोऽस्तु । अनुसन्धानराहित्वाविशेषात् 'योगिनोऽयोगिनो विशेषो न स्यात्' इत्यभिप्रायेण सिद्धान्तयति ।। तत्राहेति ।। मूलग्रन्थे अन्यथा इत्यत्र अपि शब्दाध्याहारेणाह ।। योगित्वेन विनापीति ।। ननु 'विशेषो न स्यात्' इत्यत्र विशेषशब्देन अनेकदेहजन्यदुःखानुसन्धानाननुसन्धानरूपो विशेषो विवक्षितः ? किं वा एकशरीरयोगित्वानेकशरीरयोगित्वलक्षणः? अथ वा स्वभोगसाधनानेकशरीरभावाभावलक्षणः? नाद्यः योगिनोऽप्यनुसन्धाना-भावेनेष्टापत्तेः । नापि द्वितीयः ऐकात्म्यवादिनामयोगिनोऽप्यनेकशरीर-सद्भावेनेष्टापत्तेः । तृतीयस्तु स्यादेव अयोगिनोऽनेकशरीरत्वेऽपि तेषां स्वभोगसाधनत्वाभावात् इत्याक्षिपति ।। कथमयोगिन इति ।। भोगस्य स्वीयत्वं यदि नाम स्वानुसन्धेयत्वं तदा न योगिनोऽपि तत् । स्वशरीर-जन्यत्वं चेत् अयोगिनोप्यस्तीत्यभिप्रायेण परिहरतीत्याह ।। अत उक्तमिति ।।

(श्री.टि.) देहबाहुल्यार्थमेवेति । न सुखाद्यनुसन्धायेत्येवार्थः । तस्य देहबाहुल्यस्य । तत्र तत्र तस्मिंस्तस्मिन्देहे । मूले अन्यथेत्यनन्तरमपि शब्दोऽध्याहार्य इत्यभिप्रेत्यान्यथेत्यस्यार्थमाह ।। योगित्वेन विनापीति । अयोगिष्वस्मादादिष्वित्यर्थः ।। कथमयोगिन इति । एकस्यात्मनोऽस्मदादेः एक एव देहः प्रमितः । अतः कथं देहबाहुल्यं सिद्धमित्यर्थः ।। अङ्गीकृतत्वादिति । तथा चैकस्यात्मनो देवदत्तस्य देहबाहुल्यं सिद्धमित्यर्थः ।।

(सत्य.टि.) अप्रयोज(कत्व)नत्वमिति । इच्छाया इति (इच्छां प्रतीति) शेषः ।

भोगानुसन्धानार्थेतीति । 'भोग शब्दोऽत्र सुखादिरूपविषयपरः । ततश्च तत्तच्छरीरावच्छेदेन जायमानसुखाद्यनुसन्धानार्थेत्यर्थः ।

## आत्मैक्यवादिभिर्योग्ययोगिनोर्विशेषसमर्थनम्

**(टी.) अथ मन्येत, एकस्यैव योगिनोऽनेकशरीरगतसुखानुसन्धानाभावेऽपि योगिन एवानेकशरीरत्वम् इति विशेषो युज्यते । तेषां शरीराणां तत्कर्मफलभोगार्थत्वात् । भोगस्य च अनुसन्धानेन विनाप्युपपत्तेः । न चैवं सकलदेहगतचेतनानां स्वभावतोऽभेदेऽपि देहबाहुल्यस्य अस्ति देवदत्तकर्मफलभोगार्थतेति ।**

## तन्मतनिराकरणम्

**तदेतदसत्, सर्वदेहगतात्मनां देवदत्ताभेदेन सर्वकर्मणामपि देवदत्तसम्बन्धित्वापत्त्या सर्वदेहानां देवदत्तकर्मफलभोगार्थताऽभावानुपपत्तेः । अभेदेऽपि देवदत्तोपाधिकृतमेव कर्म देवदत्त-**

सम्बन्धि नान्यदिति नियम इति चेन्न । अभेदादेव सर्वोपाधीनामपि देवदत्तोपाधित्वापातात् । देवदत्तकर्मनिर्मित एव देवदत्तोपाधिर्नेतरोऽभेदेऽपीति चेत् तत्राह

मूलम्— सिद्धौ हि कर्मभेदस्य स्यादुपाधिविभिन्नता ॥ ९ ॥

तत्सिद्धौ चैव तत्सिद्धिरित्यन्योन्यव्यपाश्रयः ।

इदं देवदत्तस्यैव इदं यज्ञदत्तस्यैव इति कर्मभेदसिद्धौ तत्तत्कृतत्वेन अयं देवदत्तोपाधिः अयं यज्ञदत्तोपाधिः इति उपाधिविभिन्नता स्यात् स्वरूपाभेदेन निमित्तान्तराभावात् । उपाधिभेदसिद्धावेव कर्मभेदसिद्धिः उक्तादेव हेतोः । ततश्च अन्योन्याश्रयात् नैकमपि सिद्ध्यति । कर्मोपाधिव्यक्तिभेदान्नान्योन्याश्रय इति चेत् । तथाप्यनवस्था स्यात् । अनादित्वान्नेति चेन्न । असिद्धविषयत्वेन मूलक्षतेः । कर्माण्युपाधयश्च विभिन्ना एव दृश्यन्त इति चेत् सत्यं, तद्भेदस्य स्वाभाविकात्मभेदेनैवोपपत्तेः । तदेवं योगिनोऽनुसन्धानाभावे विशेषाभावप्रसङ्गादनुसन्धानमङ्गीकार्यं, अभेदो वा त्याज्यः । अनुसन्धाने च सति उपाधिविश्लेषोऽकिञ्चित्कर इति 'स्वरूपैक्याङ्गीकारे सुखदुःखादिभोगो भेदेन न दृश्येत' इत्युक्तं युक्तम् ।

(मं.टि.) शङ्कते ॥ अथेति ॥ अनेकशरीरसद्भाव इति ॥ स्वभोगसाधनानेकशरीरसद्भाव इत्यर्थः । ॥ भोगार्थत्वादिति ॥

भोगप्रयोजनकत्वादित्यर्थः । भोगस्य स्वीयत्वं दुर्निरूपमित्युक्तमित्याशङ्क्य तन्निरूपयितुं भोग विशिनष्टि ॥ तत्कर्मफलेति ॥ स्वकर्मक्षयकारित्वं स्वीयत्वमित्यर्थः । कर्मक्षयाय भोगार्थत्वात् इत्यत्र भोगस्य अपुरुषार्थत्व-शङ्कानिरासाय कर्मक्षयः फलत्वेनाभिहितः । इदानीं त्वविशेषशङ्कानिरासार्थ-मभिधीयत इति न पौनरुक्त्यम् ॥ भोगस्य चेति ॥ 'सुखत्वादिकं ज्ञातैकसन्मात्रनिष्ठं न भवति धर्मत्वात् घटत्वादिवत्' इत्यनुमानेनोत्पन्नस्यापि सुखस्याननुसन्धानोपपत्तेरिति भावः । अयं च विशेषः अयोगिनो नास्तीत्याह ॥ न चैवमिति ॥ एवं योगिवत् शरीरबाहुल्यस्य यज्ञदत्तादिशरीराणां देवदत्तकर्मफलभोगार्थता नेति सम्बन्धः ।

यदुक्तमनुमानं तत्र ज्ञातैकसन्मात्रनिष्ठत्वं प्रसिद्धं न वा ? न चेत् तदभावोऽप्यप्रसिद्ध इत्यप्रसिद्धविशेषणत्वम् । प्रसिद्धं चेत् यत्र प्रसिद्धं तन्निष्ठधर्म एव व्यभिचारः । अस्मद्रीत्या आत्मत्वादौ व्यभिचारश्च । आत्मनः स्वकर्मकसंविद्रूपत्वात् । सुखादेर्ज्ञातैकसत्वानङ्गीकारे संशयादि-गोचरत्वापत्तिरिति तर्कबाधश्च । सुखादिज्ञानरूपस्य साक्षिणो नित्यत्वेन तज्ज्ञानस्यावश्यकत्वाच्चेत्यादयो दोषा ऊह्याः । तस्माद्भोगानुसन्धानं दुष्परिहरम् ।

अपि च अस्त्वनुसन्धानं विनापि भोगः तथापि न विशेषः सूपपाद इत्याह ॥ तदेतदिति ॥ कारिकायां भेदभिन्नताशब्दौ भिन्नस्वाभि-कत्वापरपर्यायनियमवाचकौ । कर्मोपाधिस्वरूपभेदपरत्वे प्रकृतानुपयोगादि-त्याह ॥ इदं देवदत्तस्येति ॥ कोटिद्वयाङ्गीकारे खलु अन्योन्याश्रयः । प्रकृते च अनेककोटिसद्भावान्नान्योन्याश्रय इति शङ्कते ॥ कर्मेति ॥ एवं तर्ह्य-नवस्थाऽस्त्विति परिहरति ॥ तथापीति ॥ प्रवाहस्यानादित्वात् बीजाङ्कुरा-दाविव नानवस्था दोषायेति शङ्कते ॥ अनादित्वादिति ॥ दृष्टः कर्मोपाधि-नियमोऽनन्यथासिद्धश्चेत्खलु नियम्यनियामकभावापन्नां कर्मोपाधिपरम्परां

कल्पयेत् । स एव न दृश्यत इति गूढाभिसन्धिः परिहरति ।। नासिद्धेति ।। अभिप्रायमजानानः पर आह ।। कर्माणीति ।। विभिन्ना इति ।। कर्माणीत्यनेन विभिन्नानीति लिङ्गव्यत्ययेन सम्बन्धः । नियमस्य दृष्टत्वमात्रमङ्गीकरोति ।। सत्यमिति ।। कल्पकत्वं तु नाङ्गीक्रियते अन्यथासिद्धत्वादिति गूढाभिसन्धिं विवृणोति ।। तद्भेदस्येति ।। अयं भावः, 'यद्धि यस्य कारणं न तत्तस्य कार्यं' इति यथा नियमः तथा यो धर्मो यन्निरूप्यकारणतावच्छेदकः नासौ तन्निरूप्यकार्यतावच्छेदकः यथा तन्तुत्वं' इत्यपि नियमः । तत्र पटनिरूप्य-कारणतावच्छेदकस्य तन्तुत्वस्य न पटप्रतियोगिककार्यतावच्छेदकत्वम् । न हि कश्चिदपि तन्तुः पटजन्यः । येन तन्तुत्वं पटाख्यकारणनिरूप्य-कार्यतावच्छेदकं स्यात् । प्रकृते च उपाधिनियमनिरूप्यकारणतावच्छेदकस्य कर्मनियमत्वस्य तन्निरूप्यकार्यतावच्छेदकत्वमस्त्येव । कस्यचित्कर्म-नियमस्योपाधिनियमकारणत्वेऽपि कस्यचित् कर्मनियमस्योपाधिनियम-कार्यत्वात् । बीजाङ्कुरादौ गत्यन्तराभावात्तथा अङ्गीक्रियते । न चैवं प्रकृते । अन्यथाप्युपपन्नत्वादिति । उपसंहरति ।। तदेवमिति ।। योगिनोऽनुसन्धान-लक्षणविशेषमनङ्गीकृत्य अनेकशरीरित्वलक्षणविशेषाङ्गीकारेऽयोगिनस्तद-भावसिद्ध्यर्थं आत्माभेदस्त्याज्य इत्याह ।। अभेदो वेति ।। योगिनो विशेषसिध्यर्थं चात्माभेदत्यागे घट्टकुट्यां प्रभातवृत्तान्तायितं स्यादिति भावः। अथ तत्परिहाराय योगिवदयोगिनोऽप्यनेकशरीरित्वमङ्गीक्रियते तथा योगिनोऽनुसन्धानलक्षणविशेषोऽस्तीत्यभिमानः तदा उपाधिसंश्लेषविश्लेषौ नानुसन्धानाननुसन्धाननियामकौ योगिषु संश्लेषव्यतिरेकेऽप्यनुसन्धानदर्शनेन व्यतिरेकव्यभिचारात् विश्लेषसद्भावेऽप्यनुसन्धानदर्शनेन अन्वयव्यभिचारा-च्चेत्याह ।। अनुसन्धाने चेति ।।

**(श्री.टि.)** योगिन एवेति । तथाचानुसन्धानरहितदेहबाहुल्यं योगित्वं विनाऽयोगिनोऽपि सिद्धमित्युक्तमसदिति भावः । तेषां शरीरणां

योगीश्वरगृहीतशरीराणाम् ।। तत्कर्मफलभोगेति । तच्छरीरापादकयोगीश्वरीयकर्मफलभूतसुखाद्यनुभावार्थत्वादित्यर्थः । नन्वनुसन्धानाभावे भोगोनुपपन्न इति चेत्तत्राह ।। भोगस्य चेति ।। अनुसन्धानेन विनापीति ।। देहान्तरैरननुभूयसुखाद्यनुसन्धानेन विनापि योगिन उपपत्तेरित्यर्थः ।

विशेषो योगिनः कुत इत्युक्तदोषमयोगिष्वयं प्रकारो न सम्भवतीत्याशयेन परिहरति ।। न चैवमिति । देहबाहुल्यस्य देवदत्तकर्मफल- भोगार्थतास्तीत्येवं भवद्भिर्न वक्तव्यमित्यर्थः । यथा एकस्यैव योगिनो देहबाहुल्यं तत्कर्मफलभोगार्थं एवमेकस्यैवायोगिनो देवदत्तस्य यज्ञदत्तादिदेहबाहुल्यं तत्कर्मफलभोगार्थमिति वक्तुं न शक्यते । तत्तत्कर्मणां भेदे यज्ञदत्तादिशरीराणां यज्ञदत्तकर्मफलभोगार्थत्वेन देवदत्तकर्मफलभोगार्थत्वादिति भावः। सर्वकर्मणां यज्ञदत्तादिकर्मणाम् । शङ्कते ।। अभेदेपीति ।। देवदत्तोपाधीति । देवदत्ताभिधदेहेत्यर्थः । सर्वोपाधीनाम् । यज्ञदत्ताद्यभिधदेहानाम् । पुनः शङ्कते ।। देवदत्तेति । अभेदेपीत्यादौ योज्यम् । इदं कर्म । ननूपाधिभेदस्य कर्मभेदं विना तत्तत्स्वरूपभेदेनैवोपपत्तेः कर्मभेदस्य निमित्तत्वाभाव इति चेत्तत्राह ।। स्वरूपाभेदेनेति । अङ्गीकृतत्वेन निमित्तेनेत्यर्थः । चैतन्यस्य स्वरूपस्यैकत्वेन स्वरूपभेदस्य निमित्तत्वानुपपत्तौ कर्मभेदव्यतिरेकेणोपाधिभेदे निमित्तान्तराभावादित्यर्थः । तत्सिद्धौ चेत्यादि व्याख्याति ।। उपाधिभेदसिद्धाविति ।। उक्तादेव हेतोरिति । स्वरूपाभेदेन तद्भेदस्य कर्मभेदे निमित्तत्वानुपपत्तेरुपाधिभेदं विना तद्भेदेनिमित्तान्तराभावादित्यर्थः ।। व्यक्तिभेदादिति । यथा बीजादङ्कुरमङ्कुराद्बीजमिति सामान्येनान्योन्यसापेक्षतया अन्योन्याश्रयप्राप्तावपि न बीजाङ्कुरव्यक्तिभेदादन्योन्याश्रयः । एवं कर्मोपाधिसामान्ययोरन्योन्यसापेक्षत्वेनान्योन्याश्रयप्राप्तावपि कर्मोपाधिव्यक्तिभेदान्नान्योन्याश्रय इत्यर्थः । अनवस्थेति ।। बीजाङ्कुरव्यक्तिभेदमङ्गीकृत्य परंपराङ्गीकारे यथानवस्था तथेत्यर्थः । अनादित्वादिति ।

बीजांकुरव्यक्तिभेदेन प्राप्तानवस्था यथानादित्वान्न दोष एवमिहापीत्यर्थः । असिद्धविषयत्वेन मूलक्षतेरिति । अप्रामाणिकविषयत्वेनेत्यर्थः । यदर्थमुत्तरोत्तरानुसरणम् । तन्मूलमुत्पत्तिर्ज्ञप्तिर्वा । युक्तं बीजाङ्कुरस्थलेऽनादित्वेनानवस्थाया अदोषत्वम् । मूलभूतांकुरोत्पत्तेः प्रत्यक्षसिद्धत्वेन प्रामाणिकतया परम्परा कल्पकसद्भावात् । तदकल्पने च मूलक्षतिप्रसङ्गात् । न चैवं प्रकृते सम्भवति । चैतन्याभेदपक्षे कर्मोपाधिव्यक्तिभेदरूपमूलस्यैवाप्रामाणिकत्वेन तस्यैव क्षतेरित्यर्थः ।

नन्वत्रासिद्धविषयत्वं नास्ति । अङ्कुरवन्मूलभूतकर्मोपाधिव्यक्तीनां भेदस्यापि प्रत्यक्षसिद्धत्वादिति शङ्कते ॥ कर्माण्युपाधयश्चेति ॥ तद्भेदस्येति । कर्मोपाधिव्यक्तिभेदस्येत्यर्थः । सुखदुःखादिभोगश्चेत्यारभ्य विशेषो योगिनः कुत इत्यन्तश्लोकत्रयेणोक्तं प्रमेयं व्युत्क्रमेणोपसंहरति ॥ तदेवमित्यादिना ॥ विशेषाभावेति । अयोगिभ्योऽस्मदादिभ्य इति शेषः । अभेदोवेत्यतः पूर्वं तदनङ्गीकारे चेति शेषः ॥ उपाधिविश्लेषोऽकिञ्चित्कर इति । तथा च विश्लिष्टोपाधिभेदाभावस्यानुसन्धानप्रयोजकत्वमङ्गीकृत्य तदभावेन अनुसन्धानाभावकथनमयुक्तम् । उक्तरीत्या अनुसन्धानाङ्गीकारे उपाधिविश्लेषस्याकिञ्चित्करत्वादित्यर्थः ।

**(सत्य.टि.)** अनादित्वान्नेति चेदिति । अनादित्वेन मूलक्षयस्य वक्तुमशक्यत्वात् नानवस्था । बीजांकुरादावपि अनवस्था स्यात् इत्यर्थः ।

असिद्धविषयत्वेनेति । बीजाङ्कुरयोः कार्यकारणभावस्य प्रामाणिकत्वात्, अन्यथासिध्यभावाच्च न मूलक्षतिः । न हि स्वोपाधिकृतमेव स्वकर्म इति नियमोऽस्ति, पुत्रदेहकृतकर्मणोऽपि पितृकर्मत्वदर्शनात्; येन बीजाङ्कुर साम्यं स्यात्; इति भावः ।

एतेन 'उपाधिकर्मभेदः प्रमाण(अनुभव)सिद्धः, परम्परा च अनादित्वेन सिद्धा; एवञ्च यदि मां प्रति मूलक्षतिः तर्हि तवापि स्यात्, अविशेषात्' इति

परास्तम्, कर्मभेदस्य त्वदुच्यमानकेवलोपाधिहेतुकत्वस्य अप्रामाणिकत्वात् । न च 'कर्मभेदस्य जीवभेदेन सहितोपाधिकृतत्वमपि नास्ति, त्वया पित्रादिभिन्नपुत्रदेहकृतकर्मणोऽपि पितृकर्मत्वाङ्गीकारात्' इति वाच्यम्; कर्मणः स्वत्वस्य (तः) प्राप्तेः शास्त्राधीनत्वस्य मया अङ्गीकारेण, स्वकृत(स्व)त्वस्य देहकृतत्वस्य वा (स्य प्र) प्रयोजकत्वेनानङ्गीकारात् ।

## अद्वैतवादद्वयसाधारणदोषकथनम्

(टी.) एवमसत्योपाधिनिमित्ताध्यस्तभेदमङ्गीकुर्वतां सत्योपाधिकृतसत्यभेदमभ्युपगच्छतां चाद्वैतवादिनां पक्षं पृथङ्निराकृत्य साधारणदोषेणापि दूषयति

**मूलम्— आत्मस्वभावभेदस्य विदोषत्वेन चाखिलः**
**॥ १० ॥**

**प्रत्यक्षादिविरोधाच्च दुष्टः पक्षोऽयमञ्जसा ।**

'जीवात्मपरमात्मनोः जीवानां च यो भेदः स स्वभावत एव, न मिथ्यासत्योपाधिनिमित्तः' इति पक्षस्य । विदोषत्वेनेत्युपलक्षणम् । प्रामाणिकत्वेनेत्यपि ज्ञातव्यम् । अयमखिलः पक्ष इत्युक्तोभयविधाद्वैतसिद्धान्तः । प्रत्यक्षादिविरोधाच्चेत्युपलक्षणम् । प्रमाणाभावाच्चेत्यपि द्रष्टव्यम् । परपक्षप्रतिक्षेपेण स्वपक्षसाधनेन च सिद्धान्तस्य प्रतिष्ठा तदभावे दुष्टता । परपक्षप्रतिक्षेपो द्विविधः बाधकसाधकभावाभावव्युत्पादनभेदात् । स्वपक्षसाधनमपि साधकबाधकभावाभावव्युत्पादन-

**भेदेन द्विविधम् । तत्रैकैकस्याप्यभावो दुष्टत्वहेतुः किमु सर्वस्येति । तदिदमुक्तं अञ्जसा इति । तत्र आत्मस्वभावभेद-बाधकस्य तदभेदसाधकस्य चाभावोऽन्यत्र व्युत्पादितः ।**

**(मं.टि.)** मूलग्रन्थे दुष्टः पक्षोऽयमित्यत्र महाप्रकृतस्य पक्षद्वयस्य दुष्टत्वं विवक्ष्यते । तथा चाखिलपदप्रयोगो युक्त इत्यभिप्रेत्य वृत्तानुवादपूर्वकं वर्तिष्यमाणमवतारयति ॥ एवमिति ॥ आत्मेत्यत्र भेदं प्रति आत्मनो न धर्मित्वमात्रं नापि प्रतियोगित्वमात्रम् । परेणापि आत्मनो जडात्, जडस्य चात्मनो भेदाङ्गीकारात् । किं तर्हि ? उभयमित्याह ॥ जीवेति ॥ स्वभावभेदस्य इत्यत्र पञ्चमीतत्पुरुषो विवक्षित इत्याह ॥ स्वभावत इति ॥ स्वभावत इत्यस्यार्थमाह ॥ न मिथ्योपाधिनिमित्त इति ॥ भेदशब्देन तत्पक्षो लक्ष्यत इत्याह ॥ इति पक्षस्येति ॥ चशब्दार्थमाह ॥ विदोषत्वेनेत्युप-लक्षणमिति ॥ ज्ञातव्यमिति ॥ चशब्दसूचिततया ज्ञातव्यमित्यर्थः । नन्वेवं तर्ह्युपलक्षणं न स्यात्, चशब्देनोक्तत्वादिति चेन्न । चशब्दस्य निपातत्वात् निपातानां च द्योतकत्वेन अभिधायकत्वाभावात् । द्योतितत्वेऽपि अनभिहितत्वमात्रेणोपलक्षणपदप्रयोगोपपत्तेः । निपातानां चाभिधायकत्वे समुच्चयो वर्तत इत्यभिप्रायेण 'चो वर्तते' इति प्रयोगः स्यात् । चशब्द-स्यार्थान्तरमाह ॥ प्रत्यक्षादीति ॥ अत्राप्युपलक्षणपदप्रयोगः पूर्ववन्निर्वाह्यः । यद्वा चशब्दयोरुक्तासाधारणदूषणसमुच्चयार्थत्वं परस्परसमुच्चयार्थत्वं वा आश्रित्य उभयत्राऽपि उपलक्षणपदप्रयोगो मुख्य एव द्रष्टव्यः ।

### अञ्जसा इत्येतत्पदकृत्यम्

अञ्जसा दुष्टः इत्युक्तम् । तत्र अञ्जसा इत्यस्यार्थमाह ॥ परपक्षेत्यादिना ॥ साधकबाधकभावाभावव्युत्पादनभेदेनेति ॥

## भावत्वस्य दुर्निरूपत्वपूर्वपक्षः

ननु किमिदं भावत्वं नाम ? निष्प्रतियोगिकत्वं ? उत अभावादन्यत्वं ? यद्वा अभावत्वानधिकरणत्वम् ? अथ वा अभावविरोधित्वम् ? उत 'अस्ति' इति प्रत्ययाविषयत्वम् ? नाद्यः सादृश्यादावव्याप्तेः । तस्यापि प्रतियोगि-निरूप्यत्वात् । न द्वितीयः अभावस्यापि यत्किञ्चिदभावादन्यत्वेनाति-व्याप्तेः । न तृतीयः अभावत्व एवातिव्याप्तेः । तस्य तदनधिकरणत्वात् । न चतुर्थः नित्यत्वाभावस्याप्यनित्यत्वाभावविरोधित्वेनातिव्याप्तेः ।

न पञ्चमः अभावस्यापि 'घटाभावोऽस्ति' इति प्रतीतिविषयत्वेनाति-व्याप्तेः । अथ मतं, प्रथमप्रतीतौ 'अस्ति' इति प्रतीयमानत्वं विवक्षितम् । एवं च नातिव्याप्तिः । 'घटो नास्ति' इति ज्ञात्वैव 'घटाभावोऽस्ति' इति ज्ञानादिति चेत् केयं 'अस्ति' इति प्रतीतिः? किं 'अस्ति' इति व्यवहारोत्पादिका? किं वा अस्तिपदार्थविषयिका? किं वा अस्तित्व-प्रकारिका? नाद्यः अव्याप्तेः । 'घटोऽस्ति' इति ज्ञानस्यापि 'अस्ति' इति व्यवहारजनकत्वनियमाभावेन त्वदुक्तस्यास्तीतिप्रत्ययविषयत्वस्याभावात् । उत्पन्नस्यापि ज्ञानस्य व्यवजिहीर्षाभावेन व्यवहाराजनकत्वात् । न द्वितीयः अभावे अतिव्याप्तेः । अभावस्य अस्तिपदार्थत्वाभावे कथं पश्चात् 'घटाभावोऽस्ति' इति प्रतीतिः?

तृतीये किमिदमस्तित्वं? सत्वं वा? भावत्वं वा? आद्ये अनुगत-सत्तामनङ्गीकुर्वता त्वया स्वरूपसत्वमेव वक्तव्यं? तत्किं स्वरूपप्रतीतावेव प्रतीयते? उत न ? न चेत् कथं घटविषयिका प्रथमप्रतीतिरस्तित्वावलम्बिनी ? प्रथमे अभावविषयिकाऽपि प्रथमा प्रतीतिः कथमस्तित्वालम्बिनी न स्यात् ? अभावेऽपि स्वरूपसत्तायाः भाव इव प्रथममेव प्रत्येतव्यत्वात् । द्वितीये अन्योन्याश्रयः । तस्मान्न पञ्चमः ।

नापि षष्ठः घटस्यापि 'घटाभावो नास्ति' इति प्रत्ययविषयत्वेन असम्भवात् । प्रथमप्रतीतौ 'नास्ति' इत्यप्रतीयमानत्वं विवक्षितम् । न चैवमसम्भवः । भावस्य प्रथमं 'घटोऽस्ति' इत्यस्तित्वप्रकारेणैव प्रतीतेः । नाप्यतिव्याप्तिः । अभावस्य प्रथममेव 'नास्ति' इत्येव नास्तित्वाकारेणैव प्रतीतेरिति चेन्न । त्वन्मते घटादेरपि प्रथममेव 'अन्यात्मना नास्ति' इति प्रतीतेः । अन्यथा स्वेतरसर्वात्मना प्रतीतिप्रसङ्गात् । भेदस्य स्वरूपत्वेन तथाप्रतीत्यवश्यम्भावाच्च । तस्माद्भावत्वं दुर्निरूपम् ।

## अभावात्वस्य दुर्निरूपत्वपूर्वपक्षः

किं चेदमभावत्वं नाम? सप्रतियोगिकत्वं वा ? भावादन्यत्वं वा? भावत्वानधिकरणत्वं वा? भावविरोधित्वं वा ? 'अस्ति' इति प्रत्यया-विषयत्वं वा? 'नास्ति' इति प्रत्ययविषयत्वं वा? नाद्यः सादृश्यादावति-व्याप्तेः । न द्वितीयः भाव एवातिव्याप्तेः । भावस्यापि यत्किञ्चिद्भावा-दन्यत्वात् । न तृतीयः भावत्वानधिकरणत्वस्य अभावरूपत्वेनात्मा-श्रयत्वात् । न चतुर्थः शीतस्पर्शस्याप्युष्णस्पर्शविरोधित्वेनातिव्याप्तेः ।

ननु च स्वाभाविकभावविरोधित्वं विवक्षितम् । न चैवं शीतस्पर्श-विरोधिन्युष्णस्पर्शे अतिव्याप्तिः । शीतस्पर्शस्योष्ण- स्पर्शभावव्याप्तत्वे-नैवोपाधिना उष्णस्पर्शविरोधित्वेन स्वाभाविकविरोधाभावात् । भावा-भावयोस्तु स्वाभाविक एव विरोधः उपाधेरस्फुरणात् । न च भावज्ञानस्या-भावज्ञानाधीनत्वेन अन्योन्याश्रयः शङ्क्यः । पदार्थाश्रयत्वस्य भावत्वात् । न चाभावेऽतिव्याप्तिः । अभावे हि भवन् पदार्थे भावो वा अभावो वा । नाद्यः भावाश्रयत्वे भावत्वापत्तः । न द्वितीयः अभावे अभावाङ्गीकारे आत्मा-श्रयत्वादिति चेन्न ।

विरोधस्यानिरूपणात् । स किं सहानवस्थानलक्षणः? किं वा वध्यघातकभावलक्षणः । नाद्यः तस्याभावरूपत्वेनात्माश्रयत्वात् ।

द्वितीयेऽपि तदभावव्याप्तत्वं वा तदभावरूपत्वं वा । उभयथाऽप्यन्यो-न्याश्रयः। अथ प्रागभावप्रध्वंसयोर्भाविन सह कालतो विरोधः । अत्यन्तभावस्य तु देशत इत्यादिप्रतिनियत एव विरोध इति चेन्न । अनुगतविरोधशब्दार्थस्याभावे लक्षणाननुगतेः ।

यच्चोक्तं 'पदार्थाश्रयत्वं भावत्वं' इति तत्र वक्तव्यं, अभावस्यापि किञ्चिल्लक्षणमस्ति ? न वा ? इति । न चेद्भावाद्व्यावृत्तिर्न स्यात् । अस्ति चेत् कथं पदार्थाश्रयत्वाभावः? लक्षणस्यैव पदार्थत्वात् । ननु लक्षण-मभावानाश्रितमपि तटस्थं सत् इतरेभ्यो व्यावृत्तिं अनुगतं व्यवहारं च करोतीति चेत् तथापि तटस्थलक्षणलक्ष्यत्त्वरूपधर्माश्रियत्वेन पदार्थाश्रयत्वा-वश्यम्भवात् । न चात्माश्रयः व्यक्तिभेदाद्भावे भावान्तरवदभावेऽपि अभावान्तरस्यानुभवसिद्धत्वाच्च । तस्मान्न चतुर्थः ।

नापि पञ्चमः अभावस्यापि 'घटाभावोऽस्ति' इति प्रत्ययविषयत्वेना-सम्भवात् । प्रथमप्रतीतिविवक्षायां तु पूर्ववदेव भङ्गीभेदेन दूषणान्यूह्यानि । नापि षष्ठः घटस्यापि 'घटभावो नास्ति' इतिप्रत्ययविषयत्वेनातिव्याप्तेः । प्रथमप्रतीतौ 'नास्ति' इति प्रत्ययविषयत्वमिति चेन्न । दत्तोत्तरत्वात् ।

किञ्च प्रतीतौ प्रथमग्रहणं 'प्रथमं योऽस्ति' इत्येवं कालविशेषणं ? किं वा प्रथमा या प्रतीतिरिति प्रतीतिविशेषणं ? नाद्यः बुद्धेर्विरम्यव्यापाराभावात् । द्वितीयेऽपि किमिह जन्मनि या स्वविषयिका प्रथमा प्रतीतिः सा विवक्षिता ? किं वा एकसामग्रीजन्यासु स्वविषयिकासु या स्वविषयिका प्रथमा प्रतीतिः सा ? अथ वा यदा यदा स्वयं जायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति आपातजं विमर्शजं चेति । तत्रापातजा या संवित् सा? नाद्यः गिरिदरीवर्तिनो गजाभावस्य ज्ञानात्पूर्वमेव जातायां 'यत् प्रमेयं तदस्ति इत्यस्यां सामान्याकारेण प्रमेयमात्रविषयिकायां वन्यगजाभावस्य प्रथममस्तित्वेनैव

प्रतीत्या लक्षणाव्याप्तेः । न द्वितीयः? एकसामग्र्या अनेकज्ञान-जनकत्वायोगात् । सामग्रीभेदाभावे कार्यभेदस्य आकस्मिकत्वप्रसङ्गात् । न तृतीयः 'घटाभावो नास्ति' इति वाक्यात्प्रथममेव घटस्य नास्तित्वाकारेण प्रतीत्या लक्षणस्यातिव्याप्तेः ।

तस्माद्भावत्वाभावत्वयोर्दुर्निरूपत्वात् भावाभावव्युत्पादनभेदेन इत्युक्तं अयुक्तमिति वैतण्डिको मन्यते ।

भावत्वाभावत्वव्यवस्थाया उभयवादिभ्यामङ्गीकार्यत्वसमर्थनम्

अत्रोच्यते

भावाभावपदे तावत्प्रयुज्येते त्वयापि ते ।
प्रवृत्तिहेतुसापेक्षे पदत्वात्संमतं यथा ॥

भावाभावशब्दप्रयोग एव नाङ्गीक्रियते ? उत अङ्गीकृत्यापि प्रयोगे तत्प्रवृत्तिनिमित्तं नास्तीत्युच्यते? अथ प्रवृत्तिनिमित्तमङ्गीकृत्यापि प्रवृत्ति-निमित्तस्यानिर्वचनीयत्वं मन्यसे ? नाद्यः त्वयापि तत्प्रयोगात् । न द्वितीयः प्रवृत्तिनिमित्ताभावे पदप्रयोगानुपपत्तेः । न तृतीयः मिथ्यापदप्रवृत्ति-निमित्तदृष्टान्तेन अस्यापि निर्वचनार्हत्वसाधनात् । न च साध्यवैकल्यं शङ्क्यम् । मिथ्यापदप्रवृत्तिनिमित्तस्य मिथ्यात्वस्य त्वयैव महाप्रयत्नेन निरुक्तत्वात् । तस्मात् सामान्येन भावत्वाभावत्वयोर्व्यवस्थितिर्वादि-प्रतिवादिभ्यामङ्गीकर्तव्येति स्थिते विशेषजिज्ञासायामुच्यते ।

## भावत्वनिरुक्तिः

अभावत्वावच्छिन्नाधारतानिरूप्याधेयताश्रयान्यत्वप्रतियोगित्वं भावत्वम् । अभावत्वावच्छिन्ना या आधारता, तया निरूप्या या आधेयता, तस्य आश्रयश्चासावन्यत्वं च, तदपेक्षयैव प्रतियोगित्वमित्यर्थः । अन्यत्व

प्रतियोगित्वमित्युक्ते अभावेऽतिव्याप्तिः । तत्परिहारार्थमभावत्वावच्छिन्ने-त्यादिना अन्यत्वं विशेषितम् । अभावस्याप्यभावान्तरनिष्ठाधारत्व-प्रतियोगिकाधेयताश्रयान्यत्वप्रतियोगित्वेऽपि न सा आधारता अभावत्वेना-वच्छिद्यते । अभावत्वस्य प्रतियोगिन्यपि सत्वात् । प्रतियोगिनिष्ठस्य चान्यत्वाधिकरणतावच्छेदकत्वायोगात् ।

## अभावत्वनिरुक्तिः

अभावत्वं च स्वप्रतियोगिकानुयोगिनिर्विशेषतादात्म्यवत्प्रतियोग्यनु-योगित्वम् । स्वं प्रतियोगि यस्यासौ स्वप्रतियोगिकः । स चासावनुयोगी च । अनुयोगी नाम प्रतियोगिप्रतिसम्बन्धी । तेन सह निर्विशेषतादात्म्य-मस्यास्तीति स्वप्रतियोगिकानुयोगिनिर्विशेषतादात्म्यवान् । स चासौ प्रतियोगी च । तं प्रत्यनुयोगी तस्य भावस्तत्वमिति विग्रहः । प्रतियोग्यनु-योगित्वमित्युक्ते सादृश्यादावतिव्याप्तिः । तस्य स्वप्रतियोगिनौ गोगवयौ प्रत्यनुयोगित्वात् । तत्परिहाराय स्वप्रतियोगिकानुयोगितादात्म्यवदित्युक्तम् । एवं च नातिव्याप्तिः । सादृश्यप्रतियोगिकेन केनचिदपि गोगवययोः तादात्म्याभावेन सादृश्यप्रतियोगिकानुयोगितादात्म्यवत्प्रतियोगिनौ प्रत्यनु-योगित्वाभावात् । न चासम्भवः । घटाभावस्य स्वप्रतियोगिकेन घटाभावा-भावरूपेणानुयोगिना तादात्म्यवन्तं घटाख्यं प्रतियोगिनं प्रत्यनुयोगित्वात् । अभावाभावस्य भावत्वात् । नञ्द्वयेन प्रकृताभिधानात् । तावत्युक्तेऽ-प्यतिव्याप्तिः । सादृश्यप्रतियोगिकेन भेदेन गोगवययोस्तादात्म्यवत्वात् । तदर्थं निर्विशेषेत्युक्तम् । एवं च नातिव्याप्तिः भेदस्य स्वधर्मिणा सविशेषाभेदाङ्गीकारात् । घटादेर्घटादित्वेन भावत्वेऽप्यभावनिषेधात्मनाऽ-भावत्वाच्च ।

## अभावाभावस्य भावरूपत्वानङ्गीकारे अनवस्थादोषः

ये पुनरभावाभावो न भावः किं तर्हि ? अभावव्यवहारादभाव एवेत्याहुः । तेषामभावपरम्परया अनवस्था दुर्वारा । तस्माद्युक्तं भावाभावव्युत्पादनभेदेन इति । प्रपञ्चस्य प्रयोजनमाह ।। तत्रैकैकस्येति ।। तत्र चतुर्णां मध्य इत्यर्थः ।

**(श्री.टि.)** स्वभावत एवेत्यस्यार्थो न मिथ्येति । मिथ्याभूतस्सत्यभूतश्चोपाधिस्तस्मिन्निमित्तो नेत्यर्थः । भेदस्येत्यत्र भेदशब्दस्तत्पक्षोपलक्षक इत्याह ।। इति पक्षस्येति ।। उपलक्षणमिति ।। ननु चशब्दद्वयसद्भावात्तयोरेव प्रामाणिकत्वप्रमाणभावसमुच्चायकत्वोपपत्तेः । उपलक्षणमिति कस्मादुक्तमिति चेत् । उच्यते । पूर्वोत्तरार्धस्थितयोश्चशब्दयोः परस्परसमुच्चायकत्वेनैव चरितार्थत्वमभिप्रेत्य प्रामाणिकत्वप्रमाणाभावयोरुपलक्षणं कृतमिति ज्ञातव्यम् । अंजसेत्यस्याभिप्रायमाह ।। परपक्षेत्यादिना । प्रतिष्ठा प्रकर्षेण स्थापनं भवतीति शेषः । तदभावे परपक्षप्रतिक्षेपस्वपक्षसाधनयोरभावे ।। बाधकेति । परपक्षे बाधकभावसाधकभावेति विवेकः ।। साधकेति । साधकभावबाधकाभावेति विवेकः ।। एकैकस्येति । परपक्षप्रतिक्षेपस्याभावः स्वपक्षसाधनस्याभावो वा सिद्धान्तस्य दुष्टत्वे हेतुः। सिद्धान्तस्य प्रतिष्ठापको न भवतीति यावत् । तथा बाधकसद्भावव्युत्पादनाभावः साधकाभावव्युत्पादनाभावः अपरपक्षस्य दुष्टत्वे हेतुः । परपक्षप्रतिक्षेपको न भवतीति यावदित्यर्थः ।। किम्विति । सिद्धान्तप्रतिष्ठापकद्वयस्य परपक्षप्रतिक्षेपकद्वयस्येति सर्वस्य चतुष्टयस्याभावो दुष्टत्वे हेतुरिति किमु वक्तव्यमित्यर्थः ।।

तदिदमुक्तमिति । सिद्धान्तप्रतिष्ठापकद्वयं परपक्षप्रतिक्षेपकद्वयं चेति चतुष्टयमपि परपक्षे नास्तीति प्रमेयमञ्जसेत्यनेनोक्तमित्यर्थः । उत्तरवाक्यं सङ्गमयितुमाह ।। तत्रेत्यादिना । मायिनः स्वसिद्धान्तप्रतिष्ठापकं नास्तीत्याह

॥ आत्मनः स्वभावभेदबाधकस्येति । भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यनुमानस्य ज्ञाते द्वैतं न विद्यते अविद्यमानो ह्यवभाति हि द्वय इति श्रुतिस्मृतिरूपस्य च बाधकस्येत्यर्थः ॥ तदभेदसाधकस्येति । जीवाः परमात्मनस्तत्वतो न भिद्यन्ते आत्मत्वात्परमात्तमवदित्यनुमानस्य तद्योहं सोसौ योसौ सोहं स आत्मा तत्त्वमसि अहं हरिस्सर्वमिदं जनार्दन इत्यादिरूपस्यात्माभेदसाधकस्येत्यर्थः ॥ अभाव इति । अनुमानानामाभासत्ववर्णनेन श्रुत्यादीनामन्यार्थत्ववर्णनेन च तदभावोऽन्यत्र विष्णुतत्वनिर्णयादौ व्युत्पादित इत्यर्थः ।

(सत्य.टि.) न मिथ्यासत्येति । मिथ्योपाधिनिमित्तः सत्योपाधिनिमित्तश्च भेदो न इत्यर्थः ।

## जीवभेदस्य प्रत्यक्षत्वसमर्थनम्

**(टी.) भेदसाधकाभेदबाधकव्युत्पादनायोत्तरं वाक्यम् । तत्रेदमाह, यदुक्तं 'प्रत्यक्षादिसिद्धो जीवेश्वरयोर्जीवानां च भेदः, तत एव तदभेदः प्रत्यक्षादिविरुद्धः' इति तदयुक्तं, सर्वस्य हि स्वात्मैव प्रत्यक्षो न तु जीवान्तरमीश्वरो वा । न च प्रत्यक्षाप्रत्यक्षधर्मः प्रत्यक्षो वायुवनस्पतिसंयोगवत् । तत्कथं भेदः प्रत्यक्षः इत्याशङ्कां परिहरञ्जीवभेदस्य प्रत्यक्षतां तावत्समर्थयते ।**

**मूलम्— चेष्टालिङ्गेन सात्मत्वे परदेहस्य साधिते ॥११॥**

**अन्यत्त्वं स्वात्मनस्तस्मात्सर्वैरेवानुभूयते ।**

'भेदो हि नैक एव अनेकधर्मः' इत्युपपादितमन्यत्र । किन्तु ? एकस्मिन् धर्मिणि परप्रतियोगिक एव । तस्य च प्रत्यक्षता धर्मिणः प्रत्यक्षतां प्रतियोगिनश्च स्मरणमपेक्षते । तत्र धर्मी स्वात्मा तावत् प्रत्यक्षसिद्धः । प्रतियोगिस्मृतिहेतुश्चानुभवोऽनुमानाद्भवति । तथा हि, परशरीरं तावत्प्रत्यक्षसिद्धम् । तस्य चेष्टादिलिङ्गेन स्वशरीरवत् सात्मत्वमनुमातुं शक्यते । चेष्टा नाम हिताहितप्राप्तिपरिहारेच्छापूर्वको व्यापारः । न परिस्पन्दमात्रं येन व्यभिचारः स्यात् । न चैवं सन्दिग्धासिद्धता । हिताहितप्राप्तिपरिहारानुगुणतायाः स्वात्मदृष्टान्तेनैवावगमात् । अतः तस्मात् परशरीराधिष्ठातुः स्वात्मनोऽन्यत्वं प्रत्यक्षं भवितुमर्हति । न चैवं सम्भवनामात्रम् । सर्वैरपि तु अनुभूयत एव । न हि चेष्टाविशेषानुमितप्रयत्नविशेषवतः परात्मनः स्मृतौ सत्यां तथाविधप्रयत्नविरहिणं स्वात्मानं प्रत्यक्षत एवानुभवस्तस्मात्स्वात्मनोऽन्यत्वं नानुभवति इति युज्यते ।

(मं.टि.) सिद्धान्तिनैवमुक्ते अन्यस्तत्परिजिहीर्षतीत्याह ।। तत्रेदमाहेति ।। बुद्धिपरिकल्पितप्रतिवाद्यभिप्रायेण प्रथमपुरुषप्रयोगः । अनूदितं दूषयति परः ।। तदयुक्तमिति ।। स्वात्मैवेत्येकारस्य व्यावर्त्यमाह ।। न त्विति ।। भेदस्तावदुभयधर्मः । उभयप्रतीतिसापेक्षत्वात् । तत्र किं सामान्यादिवत् प्रत्येकं परिसमाप्तः? किं वा संयोगादिवत् व्यासज्यवृत्तिः? नाद्यः एकव्यक्त्युपलम्भेऽपि गोत्वोपलम्भवत् धर्मिप्रतियोग्यन्यतरप्रतीत्यैव भेदप्रतीतिप्रसङ्गात् । द्वितीयं दूषयति ।। न चेति ।।

इत्यादावपि 'ब्रह्मण एव सत्यत्वं प्रतिपाद्यते न सत्यत्वस्य सत्यत्वं' इति ब्रह्मणि या सत्यता तस्याः सत्यता न स्यात् । इष्टापत्तिरिति चेन्न । ब्रह्मसत्यताया असत्यत्वे ब्रह्मासत्यताप्रसङ्गादिति भावः ।

ननु श्रुतेः प्रामाण्यमेव कुतः येन सत्यत्वं पारमार्थिकं स्यादित्यत आह ॥ प्रामाण्यस्येति ॥ सिद्धत्वादिति ॥ स्थितत्वादित्यर्थः । ननु प्रामाण्यं स्वतस्तिष्ठतु । किं चातः? तस्मिन् हि ज्ञातेऽर्थसत्यता ज्ञायते इति, अत्राप्येतदेवोत्तरम् ॥ प्रामाण्यस्येति ॥ सिद्धत्वादिति ॥ ज्ञातत्वादित्यर्थः । पक्षद्वयेऽप्यतिप्रसङ्गं शङ्कते ॥ एवं सतीति ॥ स्यादित्युपलक्षणम् । प्रमीयेतेत्यपि द्रष्टव्यम् । परिहरति ॥ नेति ॥ प्रामाण्यस्येत्युपलक्षणं तत्प्रमितेश्चेत्यपि द्रष्टव्यम् । तत्र प्रामाण्यस्यापनयने हेतुः करणदोषैरिति । तत्प्रमित्यपनयने हेतुः बाधकप्रमाणैरिति । अनुसंहितैरिति शेषः । बाधकप्रमाणोदयात्पूर्वं तु प्रामाण्यं ज्ञायत एवेति भावः । स्थितत्वादित्यत्र प्रमितत्वादित्यप्यध्याहर्तव्यम् । शङ्कते ॥ अपौरुषेयतयेति ॥ परिहरति ॥ नेति ॥ प्रतिपत्तुर्हि दोषः पदवाक्ययोः शक्तितात्पर्यापरिज्ञानम् । तदपि प्रतीतार्थबाधकप्रमाणोन्नेयम् । बाधकप्रमाणाभावेऽपि पदवाक्ययोः शक्ति-तात्पर्यसन्देहमात्रेण प्रतीतार्थपरित्यागे गवानयनवाक्यं श्रुत्वा तात्पर्यसन्देहेन न प्रवर्तेतेत्यर्थः ।

**(श्री.टि.)** वस्तुविषयकमेव ज्ञानमिति । यथा विज्ञानमानन्दं ब्रह्मेत्यादौ सत्यपदाभावेपि स्वतःप्रमाणया श्रुत्यैव विज्ञानानन्दात्मकत्वं पारमार्थिक-सत्यमिति सिध्यति । तथा प्रकृतेपि यः सर्वज्ञ इत्यादिश्रुतौ सत्यपदाभावेपि सार्वज्ञादिकं पारमार्थिकसत्यमेव सिध्यतीत्यर्थः कुत इत्यत आह ॥ प्रामाण्यस्वतस्त्वस्येति । उत्पत्तौ ज्ञप्तौ चेति शेषः । ज्ञानजनकमात्रजन्यत्व-मुत्पत्तौ प्रामाण्यस्य स्वतस्त्वम् । ज्ञानग्राहकमात्रग्राह्यत्वं ज्ञप्तौ प्रामाण्यस्य स्वतस्त्वम् । ज्ञानं येन जायते तेन प्रामाण्यं सहैव जायते । तथा तज्जन्यं

ज्ञानमपि येन ज्ञायते तेनैव तत्प्रामाण्यमपि ज्ञायते । तथा च यथा-वस्थितार्थज्ञेयविषयकारित्वरूपप्रामाण्यस्यार्थसत्तादिघटितत्वेन वस्तु-विषयकमेव ज्ञानम् । तत्सत्यत्वे प्रमाणमित्यर्थः । ततः किं प्रकृत इत्यत आह ।। तत्सत्यतामिति । यः सर्वज्ञ इत्यादिश्रुतेः प्रमाणभूतज्ञानजनकत्वा-त्प्रामाण्यस्य चार्थसत्ताघटितत्वाद्यः सर्वज्ञ इत्यादिश्रुतिरेव सार्वज्ञादिगुण-सत्यतां प्रतिपादयतीत्यर्थः ।। आक्षेप इति । भवेदेवं यदीत्यादिना कृत इत्यर्थः ।

ननु यदि प्रामाण्यस्य स्वतस्त्वात् । वस्तुविषयकं ज्ञानमेव तत्सत्यत्वे प्रमाणं स्यात् तर्हीदं रजतमिति ज्ञानप्रामाण्यस्यापि ज्ञानजनकजन्यत्वेन स्वतस्त्वापत्त्या तस्य चार्थसत्ताघटितत्वेन शुक्तिरजतस्यापि सत्यता स्यादिति शङ्कते ।। एवं सतीति ।। औत्सर्गिकेति । सव्यभिचारनियमोह्युत्सर्गः। जायमानं ज्ञानं प्रमाणं सदेव जायत इत्युत्सर्गः । तथा प्रामाण्यमपि ज्ञानग्राहकेणैव गृह्यत इत्यप्युत्सर्गः । अपवादादप्रामाण्यमपि जायते ज्ञायते च । प्रामाण्योत्पत्त्यपवादकः करणदोषः । ज्ञप्त्यपवादको बाधकप्रत्ययः । तथाचेन्द्रियदोषेण काचादिना शुक्तिरजतादिज्ञानेऽप्रामाण्यमेव जायते । बाधकप्रत्ययेन च प्रामाण्यमेव ज्ञायते । तथा चाप्रामाण्यस्यार्थासत्त्व-घटितत्वान्न तद्विषयकं ज्ञानं तत्सत्यत्वे प्रमाणमिति न तेन तस्य सत्यतासिद्धिरित्यर्थः । न चैवं प्रामाण्यस्वतस्त्वहानिः । अप्रामाण्यजनक-सामग्र्यसमवहितज्ञानजनकसामग्रीजन्यत्वस्योत्पत्तौ स्वतस्त्वेन तथाऽ-प्रामाण्यग्राहकसामग्र्यसमवहितज्ञानग्राहकग्राह्यत्वस्य ज्ञप्तौ स्वतस्त्वे न च विवक्षितत्वादिति ज्ञातव्यम् ।। एवमेवास्त्विति । शुक्तिरजतादिज्ञानवदेव यः सर्वज्ञ इत्यादिश्रुत्या जायमानमपि ज्ञानं अप्रमाणमेव जायताम् । तथैवज्ञायताञ्च । तथा च यस्सर्वज्ञ इत्यादिश्रुतिः न सत्यतां प्रतिपादयतीत्यर्थः ।। करणेति । प्रामाण्योत्पत्त्यपवादकस्य करणदोषस्य तज्ज्ञप्त्यपवादकस्य

बाधकप्रत्ययस्य चाभावादित्याहेत्यर्थः ।। करणदोषेति । नित्या वेदाः समस्ताश्चेत्यादिप्रमाणेन वेदापौरुषेयतायाः प्रमितत्वेन करणदोषनिबन्धन-दोषाभावोपपादनाय वेदोक्तेत्युक्तमित्यर्थः ।। दोष इति । पदवाक्ययोः शक्तितात्पर्यापरिज्ञानमेव दोष इत्यर्थः ।। सम्भवतीति । तथा च प्रतिपत्तृदोषेण वेदजन्यज्ञाने अप्रामाण्यमेव ज्ञातव्यमित्यर्थः ।। तस्यापीति । शक्तितात्पर्या-परिज्ञानरूपप्रतिपत्तुर्दोषोपि प्रतीतार्थे बाधकप्रमाणसद्भावेनोन्नेयः । तस्य च वेदेऽभावेन प्रतिपत्तुर्दोषाभावनिश्चयादित्यर्थः । बाधकप्रमाणाभावेपि शक्ति-तात्पर्ययोः संदेहमात्रेण श्रुतिप्रतीतार्थपरित्यागे गवानयनादिवाक्यं श्रुत्वा तात्पर्यसंदेहेन न प्रवर्तेतेति ज्ञातव्यम् ।।

**(सत्य.टि.)** ननु सत्यं 'वस्तुविषयकं ज्ञानम्, तत्सत्ताविषयकम्' इति । तथापि न सार्वज्ञ्यादिगुणानां सत्यत्वसिद्धिः, ज्ञानप्रामाण्यजनकस्य आप्तवाक्यत्वरूपगुणस्य वेदे अभावेन तज्जन्यप्रामाण्यायोगात्; इत्यत आह प्रामाण्यस्येति । ज्ञानप्रामाण्यस्वतस्त्वस्य (आप्तोक्तत्वं विनैव वेद-प्रामाण्यस्य) स्थापितत्वात्, न तज्जन्यज्ञानप्रामाण्यानुपपत्त्या तद्विषय-सत्यत्वस्य असिद्धिः; इत्यर्थः ।

एवं तर्हीति (सतीति) । 'ज्ञानं सत्ताग्राहि, तत्प्रामाण्यं च स्वत एव' इत्यङ्गीकारे, शुक्तिरजतादिज्ञानविषयस्यापि सत्यता स्यात्, अविशेषात्, इत्यर्थः ।

तदभाव इति । तदेकप्रमाणके तदभावे अभावनियमात्, इति भावः ।

## सार्वज्ञ्यादिगुणानां मिथ्यात्वाभावेन परमते अज्ञानासम्भवोपसंहारः

**(टी.) ननु 'नेह नानाऽस्ति किञ्चन' इत्यादिश्रुत्या 'विमतो विशिष्टाकारो मिथ्या विशिष्टाकारत्वात् नीलं नभ इति**

विशिष्टाकारवत्' इत्याद्यनुमानेन च सार्वज्ञ्यादेर्मिथ्यात्वप्रतीतेः कथ तत्र प्रमाणाभावः? अतो व्यावहारिकसार्वज्ञ्यादिविषयाः 'यः सर्वज्ञः' इत्यादिश्रुतय इत्यत आह

मूलम्— ...तन्मानताऽपि न ॥ १४ ॥

'नेह नाना' इत्यादिश्रुतेः तत्र सार्वज्ञ्यादिमिथ्यात्वे मानताऽपि नास्ति । तथोपपादितमन्यत्र । एवं तस्य अनुमानस्यापि मानता नास्ति । धर्मिग्राहकप्रमाणविरोधादिति व्याख्येयम् ।

न मानमित्युक्तम् । यत् उच्यते तस्यापि मानता नास्तीति अपिशब्दसम्बन्धः । तदेवं अद्वैतमते अज्ञानासम्भवोऽभिहितः ।

अज्ञानासम्भवादेव अद्वैतवादे अधिकार्याद्यसम्भवः

ततः किं? इत्यत आह

अतोऽज्ञासम्भवादेव नाधिकार्यैक्यवादिनाम् ।

अज्ञो हि शास्त्रेऽधिक्रियते । उक्तविधया अज्ञानानुपपत्त्या अज्ञो न सम्भवति । ततश्च ऐक्यवादिनां मते शास्त्रस्य अधिकारी न सम्भवति ।

मूलम्—

अतो नाज्ञातमिति च विषयो विषयान्तरे ॥ १५ ॥

अतः अज्ञानासम्भवात् अज्ञातं वस्तु न सम्भवति इति हेतोः ऐक्यवादिनां मते शास्त्रस्य विषयश्च न सम्भवति । किं तु ? विषयान्तरे देशान्तरे भेदवादे अधिकार्यादिकं सम्भवतीति उक्तोच्यमानवक्ष्यमाणशेषतया व्याख्येयम् । अज्ञातो हि शास्त्रस्य विषयो भवति शास्त्रस्य परार्थत्वात् ।

मूलम्— अज्ञाभावात्फलं कस्य... ।

अज्ञे हि सति अज्ञाननिवृत्तिलक्षणं शास्त्रफलं तस्य सम्भवति । उक्तप्रकारेण अज्ञानानुपपत्त्या अज्ञाभावात् फलं कस्य स्यात्? न कस्यापीति ।

मूलम्— ...योगः शशनृभृङ्ग्योः ।

एवं अधिकारिविषयप्रयोजनानां असत्वात् तत्सम्बन्धः शशनृभृङ्ग्योः सम्बन्ध इवानुपपन्न एव । तथा च अद्वैतमते शास्त्रस्य अनासम्भणीयत्वं स्यादिति ।

(मं.टि.) व्यावहरिकसार्वज्ञ्यादिविषयकत्वात् सर्वज्ञादिवाक्याना-मत्यन्ताप्रामाण्यं च नास्तीत्याह ।। अत इति ।। तन्मानताऽपि न इत्युक्तं मूलग्रन्थे । तद्युक्तं, श्रुत्यनुमानयोः सिद्धान्तिनापि प्रामाण्याङ्गीकारादित्या-शङ्क्याह ।। नेह नानेति ।। तन्मानतेत्यत्र तच्छब्देन श्रुत्यनुमाने परामृश्येते । तत्र श्रुतेः परोक्तार्थप्रच्यावनरूपम- प्रामाण्यम् । अनुमानस्य तु सर्वथेति मूलग्रन्थार्थ इत्यर्थः ।। धर्मिग्राहकप्रमाणविरोधादिति ।। सार्वज्ञ्यादीनामसिद्धौ आश्रयासिद्धिः । सिद्धौ च श्रुत्यैव च सिद्धत्वं वाच्यम् । श्रुतेश्च प्रामाण्यात् सत्यत्वश्च अर्थात् सिद्धमिति मिथ्यात्वसाधने धर्मिग्राहकप्रमाणबाध इत्यर्थः ।

मूलस्थातःशब्दार्थमाह ॥ उक्तविधयेति ॥ विषय इति कारिकाखण्डे अतो न इत्यस्माद्ग्रन्थात् न इत्यनुकृष्यते । चशब्दश्च भिन्नक्रम इत्याह ॥ विषयश्च न सम्भवतीति ॥ विषयान्तरे इत्येतत् वाक्यान्तरमित्याह ॥ किं त्विति ॥ उक्तोच्यमानेति ॥ भेदस्योपपादितत्वेन भेदमूलस्य विषयादेः उपपादित-प्रायत्वात्, इदानीं च परमतनिरासेन स्वमते विषयादेरर्थादुक्तत्वात् अधिकार्यादेः सविस्तरं वक्ष्यमाणत्वाच्च त्रितयशेषत्वं विषयान्तरे इत्यस्य वाक्यस्येत्यर्थः । तत्र विषयाभावमुपपादयति ॥ अज्ञातो हीति ॥ शास्त्रस्येति ॥ शास्त्रस्य परज्ञानप्रयोजनकत्वात् । परस्य चाज्ञात एव जिज्ञासा न ज्ञात इत्यर्थः । अज्ञाभावात्फलं कस्य इति वाक्यान्तरम् । योगः शशनृशृङ्गयोः इत्यस्य असङ्गतार्थत्वमाशङ्क्य इवशब्दाध्याहारेण वाक्यार्थमाह ॥ एवमधिकारीति ॥

**(श्री.टि.)** नेह नानेति । इह ब्रह्मणि किञ्चन गुणकर्मादिकं नानाभूतः प्रपञ्चश्च नास्तीत्यर्थः । विष्णुसम्बन्धिविशिष्टाकारः यस्सर्वज्ञ इत्यादि श्रुत्युक्तविशिष्टाकारः विशिष्टं स्वरूपमित्यर्थः । ननु तर्हि यस्सर्वज्ञ इत्यादि श्रुतीनां का गतिरित्यत आह ॥ व्यावहारिकेति । ब्रह्मज्ञानबाध्यत्वेन मिथ्याभूतेत्यर्थः ॥ अन्यत्रेति । मिथ्यात्वं यदि दुःखादेस्तद्वाक्यस्याग्रतो भवेदित्यादिनानुव्याख्यानेनेत्यर्थः । (तथा हि । यदि सार्वज्ञादेरात्माति-रिक्तस्य मिथ्यात्वं नेह नानेति श्रुतिबलेन स्यात्तर्हि श्रुतिवाक्यस्यैव मिथ्यात्वं स्यात् । आत्मातिरिक्तत्वात् । अन्यथा स्वस्मिन्नेव प्रामाण्यरहितं न कञ्चिदर्थं प्रतिपादयेत् । यदि चैकं वाक्यं मिथ्या स्यात्तथापि सार्वज्ञादिमिथ्यात्वं न प्रतिपादयेत् । मिथ्याभूतस्य वन्ध्यासुतवचसः साधकत्वादर्शनादिति । तथा च नेह नानेति वाक्यस्य अप्रामाण्यमिथ्यात्वाभ्यां सार्वज्ञादिमिथ्यात्व-प्रतिपादनासामर्थ्यात् । न तेन सार्वज्ञादिमिथ्यात्वसिद्धिरिति भावः । तर्हि कः श्रुत्यर्थ इति चेदुच्यते । इह ब्रह्मणि नाना भिन्नं किञ्चन गुणकर्मादिकं

नास्तीति निषेधेन सार्वज्ञादिमिथ्यात्वं भवति । सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्यबाधे इति न्यायात् । उभयनिषेधे गौरवात् । विशेषणस्य प्रथमप्राप्तत्वात् । अन्यथा तदुपपादनवैयर्थ्यात् । न जीर्णमलवद्वासाः स्नातकः स्यादित्यादौ दर्शनाच्च । अत एवोक्तं विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषण इत्येवं पदवाक्यप्रमाणविदामग्रेसरेण परमास्तिकेन भगवता श्रीमदाचार्येणोक्तो गुणकर्मभगवत्स्वरूपभेदाभाव एव श्रुत्यर्थोत्र ज्ञेय इति ।) अनुमानस्य विशिष्टाकारत्वानुमानस्य ॥ धर्मिग्राहकप्रमाणेति । सार्वज्ञादिविशिष्टाकारः सिद्धो न वा । नेति पक्षे आश्रयासिद्धिः । आद्ये श्रुत्यैव तत्सिद्धिर्वाच्या । तथा च सत्यत्वेनैव सिद्धत्वात्सत्यत्वेन श्रुतिसिद्धं विशिष्टाकारं पक्षीकृत्य मिथ्यात्वसाधने धर्मिग्राहकप्रमाणविरोध इत्यर्थः । श्रुतेः प्रतीतार्थे मानता नास्ति । अनुमानस्य सर्वथा नास्तीति विवेको द्रष्टव्यः । अपिशब्दस्य कुत्रान्वय इत्याकाङ्क्षायां तद्दर्शयति ॥ न मानमित्युक्तमिति । तथा च नन्ववेदोक्त-मिथ्यात्वे मानमित्युक्तम् । यदुच्यते नेह नानेति श्रुतिरुक्तानुमानं च मानमिति । तस्यापि मानता नास्तीत्यपिशब्दसम्बन्धो द्रष्टव्य इत्यर्थः । ऐक्यवादिनामित्ये- तदत्राप्यनुवर्तत इत्यभिप्रेत्योक्तम् । ऐक्यवादिनां मत इति । इति च विषय इत्यत्र चशब्दो भिन्नक्रम इत्याह ॥ विषयश्चेति । नञोनुवृत्तिमभिप्रेत्य न सम्भवतीत्युक्तम् ॥ उक्तोच्यमानवक्ष्यमाणशेषतयेति । अज्ञानासम्भवादेव नाधिकार्यैक्यवादिनां सम्भवति विषयान्तरे भेदवादेऽधि-कार्युपपद्यत इति पूर्ववाक्योक्तशेषतया तथा अतो नाज्ञातमिति चेति ऐक्यवादे विषयो नोपपद्यते । विषयान्तरे भेदवादे विषयस्तूपपद्यत इति उच्यमान-वाक्यशेषतया तथा अज्ञाभावात्फलं कस्येत्यैक्यवादिनां मते प्रयोजनं सम्भवति विषयान्तरे भेदवादे फलं सम्भवतीति तथा योगः शशनृशृङ्गयोरित्यैक्यवादिनां मते सम्बन्धो न सम्भवति विषयान्तरे भेदवादे

सम्बन्धः सम्भवतीति वक्ष्यमाणशेषतया विषयान्तर इत्येतत्पदं व्याख्येयमित्यर्थः । एतदुपपादयति ।। अज्ञातो हीति । कुत इत्यत आह ।। शास्त्रस्येति ।। परार्थत्वादिति । परो जिज्ञासुस्तदर्थत्वादित्यर्थः । तथा च शास्त्रस्य जिज्ञासुं प्रति प्रयोजनवत्त्वाज्ज्ञातुमिच्छारूपजिज्ञासायाश्चात एव सम्भवात्त्वन्मते चाज्ञानासम्भवेनाज्ञातवस्त्वभावान्न शास्त्रविषयः सम्भवतीत्यर्थः । शास्त्रफलं शास्त्रप्रयोजनम् । तस्य अज्ञस्य ।। सम्भवतीति । प्रतियोगितदभावयोरेकाधिकरणनिष्ठत्वनियमादिति भावः ।। न कस्यापीति । तथा चैक्यवादे प्रयोजनं न सम्भवतीति भावः । तत्सम्बन्धः तेषां परस्परं सम्बन्धः ।। अनुपपन्न एवेति । सम्बन्धिनामेवासम्भवादिति भावः ।। तथा चेति । विषयाद्यनुबन्धचतुष्टयशून्यत्वादित्यर्थः ।।

**(सत्य.टि.)** नेह नानाऽस्तीति । इह=ब्रह्मणि, नाना=सर्वज्ञत्वादिधर्मः, पारमार्थिकत्वाकारेण नास्ति; इति पूर्वपक्षिमते श्रुत्यर्थः । एतेन 'श्रुत्या असत्यत्वप्रतिपादनात्, अनुमानेन मिथ्यात्वप्रतिपादने तयोर्विरोधः' इति निरस्तम् ।

नीलं नभ इतीति । 'नीलं नभः' इति व्यवह्रियमाणविशिष्टाकारवत् इत्यर्थः ।

न मानमित्युक्तमितीति । अस्माभिः 'मानं नास्ति' इति उक्तम्; 'मिथ्यात्वे इदं मानम्' इति यत् उच्यते, तस्यापि मानता न; इति 'अपि'शब्दसम्बन्धः; इत्यर्थः ।

अधिकार्यादिकं सम्भवतीति । 'अधिकार्यादिकं सम्भवति' इत्यनेन विषयान्तर इत्यस्य उक्त-उच्यमान-वक्ष्यमाण-शेषतया व्याख्यानेन लब्धस्य अर्थस्य निरूपणं कृतम् ।। अज्ञानासम्भवादेव अधिकारी ऐक्यवादिनां न विद्यते, किन्तु विषयान्तरे विद्यते; इति उक्तशेषतया व्याख्यानम् । अतो

नाज्ञातं वस्तु विद्यते, इति मायावादिमते विषयो नास्ति, किन्तु विषयान्तरे अस्ति; इति उच्यमानशेषतया व्याख्यानम्। अज्ञाभावात् मायावादिमते फलं कस्य स्यात्, 'अधिकारिप्रधानकामनाविषयः फलम् । अधिकार्यभावेन मायावादिमते न फलम्' इति यावत्, किन्तु विषयान्तरे फलम्; इति वक्ष्यमाणशेषतया व्याख्यानम्; इति द्रष्टव्यम्।

### अज्ञानदौर्घटयस्य भूषणत्वशङ्का तन्निरासश्च

**(टी.) नन्वज्ञानासम्भव एव कथम्? ब्रह्मणो जीवस्य वा अज्ञानोपपत्तेः । न च तत्र दौर्घटयमुक्तमज्ञानस्येति वाच्यम् । यतोऽज्ञानमारोपितमेव । परमार्थसतो हि दौर्घटयं बाधकं नारोपितस्य । प्रत्युत भूषणमेव । अन्यथा आरोपितत्वानुपपत्तेः । तदुक्तं–**

> **दुर्घटत्वमविद्याया भूषणं न तु दूषणम् ।**
> **कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ।। इति ।**

**तथा च कथमधिकार्यभावः? इत्याशङ्कां सिंहावलोकनन्यायेन परिहरति**

**मूलम्— दुर्घटत्वं भूषणं चेत्स्यादविद्यात्वमात्मनः ।। १६ ।।**

**यद्यविद्याया अनुपपन्नतैव भूषणमित्यङ्गीक्रियते तदा आत्मनोऽविद्या इत्यपि नाङ्गीकर्तव्यं वस्तुद्वयकल्पने कल्पनागौरवात् । किं नाम ? आत्मैव अविद्या इत्यङ्गीकार्यं । ततश्च**

आत्मैव आत्मावरणं चेत् सर्वदा आवृतत्वप्रसङ्गो मोक्षे च आत्मनिवृत्तिरित्याद्यनुपपत्तिः अविद्याया भूषणं इत्येव समाधानं वाच्यं स्यात् । तस्मादनुपपत्तिर्वा परिहर्तव्या, अज्ञानं वा त्याज्यम् ।

सत्यां प्रतीतौ इदमुच्यते । न च आत्मनोऽविद्यात्वं प्रतीयत इति चेत्समं प्रकृतेऽपि । न हि सर्वज्ञस्य ब्रह्मणोऽज्ञानं प्रतीयते । नापि 'परमात्मैवोपाध्यवच्छिन्नोहमज्ञः' इति प्रतीतिरस्ति । यथास्वरूपं प्रतिभासाभावश्च आत्मरूपाविद्ययैव कल्प्यतां लाघवादित्युक्तमेवेति ।

किञ्च अनुपपत्तिर्भूषणमित्यङ्गीकुर्वता अधिगतवेदान्तस्याप्य द्वैतवादिनो नित्यनिरयप्राप्तिरङ्गीकर्तव्या । सर्वज्ञस्य अज्ञानानुपपत्तेरिव अधिगतमहावाक्यस्य नित्यदुःखानुपपत्तेरपि भूषणत्वसम्भवात् । निरयादेरप्यविद्यामयत्वात् इत्याह

**मूलम्— अन्धं तमोप्यलङ्कारो नित्यदुःखं शिरोमणिः ।**

स्यादिति वर्तते । अधिगतमहावाक्यस्येति शेषः । अनेन परब्रह्मणोऽज्ञानमङ्गीकुर्वाणानामिदं फलं भवतीति सूचितं भवति ।

(मं.टि.) ॥ परमार्थसतो हीति ॥ अरजते रजतत्वस्य मिथ्याभूतस्य दुर्घटस्यैव दर्शनादित्यर्थः । नन्वस्याः शङ्कायाः अतोऽज्ञासम्भवादेव इत्यतः प्रागेव प्रसक्तत्वात् अधिकारिविषयाद्यभावप्रतिपादनानन्तरं तत्परिहारोऽ-

नवसरपराहतः । किं तु तत्परिहारानन्तरमेव अतोऽज्ञासम्भवादेव इत्यादिना अधिकारिविषयाद्यभावः प्रतिपादनीय इत्यत आह ॥ सिंहावलोकनन्यायेनेति ॥ सर्वदा आवृतत्वप्रसङ्ग इति ॥ आवरणस्य आत्मनो नित्यत्वादित्यर्थः ॥ मोक्षे च आत्मनिवृत्तिरिति ॥ आवरणानिवृत्तौ मोक्षस्यैवासम्भवादित्यर्थः । 'अरजते रजतत्वं च दोषवशात् प्रतीयते' इत्यादि उपपत्तिभिरेवोपपाद्यत इति दृष्टान्तोऽप्यसङ्गत इति द्रष्टव्यम् । चोदयति ॥ सत्यां प्रतीताविति ॥ किमत्राज्ञानमात्रं प्रतीयते ? किं वा सर्वज्ञस्याज्ञानम् ? आद्ये इष्टापत्तिः । तत्रानुपपत्त्यभावश्चेत्यभिप्रेत्य द्वितीयं दूषयति ॥ न हीति ॥ नन्वथाऽपि 'अहमज्ञः' इति प्रतीयते । अहमर्थश्चास्माभिः परमात्माभिन्नोऽङ्गीक्रियत इति कथं सर्वज्ञस्याज्ञानप्रतीत्यभावः? इति चेत् तत्रापि किमहमर्थमात्रस्याज्ञानं प्रतीयते ? किं वा अहमर्थस्य परमात्माभेदोऽपि? आद्योऽङ्गीक्रियत इति मत्वा द्वितीयं दूषयति ॥ नापीति ॥ ननु तर्हि अनुपपत्तिपरिहाराय अज्ञानपरित्यागश्चेत् अपरिच्छिन्नानन्दाद्यात्मकब्रह्मप्रतिभासाभावः किंनिबन्धनः? इत्यत आह ॥ यथेति ॥ किञ्चेति ॥ युक्तिविरोधस्य भूषणत्वे श्रुतिविरोधस्यापि भूषणत्वप्रसङ्गादिति भावः । नन्वविद्यायाएव दुर्घटत्वं भूषणं न निरयादेरित्यत आह ॥ निरयादेरपीति ॥ उपादानोपादेययोरभेदादिति भावः ।

**(श्री.टि.)** तत्रेति । ब्रह्माश्रितत्वपक्षे जीवाश्रितत्वपक्षे चेत्यर्थः । दौर्घट्यमनुपपन्नत्वम् ॥ उक्तमिति । अज्ञताखिलसंवेत्तुर्घटते न कुतश्चनेत्यादिनेत्यर्थः । आरोपितत्वोक्त्या कथं दौर्घट्यपरिहार इत्यत आह ॥ परमार्थसतो हीति ॥ भूषणमेवेति । आरोपितस्य दौर्घट्यमित्यर्थः ॥ अन्यथेति । आरोपितस्य दौर्घट्यं बाधकं चेदित्यर्थः । दुर्घटत्वं आश्रयाद्यनिरूपणेनानुपपन्नत्वं घटमानत्वे आश्रयादिनिरूपणेनोपपद्यमानत्वं इत्यर्थः ॥ अविद्यात्वं दुर्घटमिति । अविद्यात्वमेवानुपपन्नमित्यर्थः । यथोक्तम् ।

अविद्याया अविद्यात्वमिदमेव स्वलक्षणम् । यन्मानतासहिष्णुत्वमिति । अविद्याया अविद्यात्वमेव स्वलक्षणम् । किं तदविद्यात्वम् । यन्मानताऽसहिष्णुत्वं प्रमाणप्रवृत्त्यसहिष्णुत्वम् । स्वविषये प्रमाणं न सहत इत्यर्थः । इदमुपलक्षणम् । आश्रयादिविचारासहिष्णुत्वं चेत्यपि द्रष्टव्यमिति तदर्थः ।। तथा च कथमिति । आरोपिताज्ञानेन सत्यमप्युपपद्यत इति भावः ।। सिंहावलोकनन्यायेनेति । यद्यपि चक्रकापत्तिरथवेत्यनन्तरं भेदश्चोपाधितः कुत इत्यतः पूर्वमेवैषा शङ्का परिहर्त्तव्या । तथापि यथा सिंहोगच्छन् परावृत्त्य पश्चादवलोकयति तन्यायेनेत्यर्थः ।। अनुपपन्नतैव । आश्रयाद्यविचारेणेति शेषः ।। वस्तुद्वयेति । आत्माविद्यारूपवस्तुद्वयेत्यर्थः ।। अङ्गीकार्यमिति । कल्पनालाघवादित्यर्थः । तथा चाविद्याया आवरणत्वाङ्गीकारादात्मन एवावरणत्वमङ्गीकार्यमिति भावः । अस्त्विति चेत्तत्राह ।। ततश्चेति । अनुपपत्तिप्रकारं विवृणोति ।। आत्मैवेति ।। सर्वदेति । आत्मन इति शेषः । आवरणस्यात्मनो नित्यत्वादिति भावः ।। मोक्षे चेति । आवरणनिवृत्तिर्हि मोक्षः । आवरणनिवृत्तौ मोक्षे आत्मनिवृत्तिरेव स्यादिति भावः ।। सत्यां प्रतीताविति । अहमज्ञ इत्यज्ञानस्य प्रतीतौ सत्यां तत्र दौर्घट्यं भूषणमित्युच्यत इत्यर्थः ।

तर्हि समानमेतन्ममापीत्यत आह ।। न चेति । न हीत्यर्थः । येन तत्रापि दौर्घट्यं भूषणमित्यङ्गीकार्यं स्यादिति भावः ।। सममिति । अज्ञानस्यापि प्रतीत्यभावादिति भावः । ननु कथमज्ञानस्य प्रतीत्यभावः । अहमज्ञ इति प्रतीतेः सर्वसिद्धत्वादिति चेत् । तत्र पृच्छामः । अज्ञानप्रतीतिः किं ब्रह्मणोऽङ्गीक्रियते उत जीवस्येति विकल्प्य आद्यं दूषयति ।। न हीति । द्वितीयमाशंक्य निराकरोति ।। नापीति । जीवस्येति शेषः । उपाध्यवच्छिन्नः परमात्मैवाहमज्ञः अज्ञानवानहमिति प्रतीतिर्जीवस्यापि नास्तीत्यर्थः । ननु जीवस्तावज्ज्ञानानन्दादिरूपब्रह्मात्मकः तस्य च स्वरूपं प्रतिभासा-

भावस्तावदस्ति । अतस्तदावरकभूताविद्या आत्मातिरिक्ता जीवेस्ती-त्यङ्गीकार्यमित्याशंक्य निषेधति ॥ यथास्वरूपमिति । नन्वधिगतवेदान्त-स्याद्वैतवादिनो नित्यनिरयप्राप्तिरिति चेत्तत्राह ॥ सर्वज्ञस्येति । सर्वज्ञस्याज्ञानं न सम्भवतीत्युक्ते यथा सानुपपत्तिरज्ञानस्य भूषणमित्युच्यते तथेत्यर्थः । महावाक्यं तत्वमस्यादि । नन्वज्ञानस्यारोपितत्वात्तस्य दौर्घट्यं भूषण-मित्युच्यते । निरयादिकं तु न घटत इति चेत्तत्राह ॥ निरयादेरपीति । उपादानोपादेययोरभेदेनाविद्याव(न्निरया)च्छिन्ननिरयादेरपि आरोपितत्वेन तद्दौर्घट्यस्यापि भूषणत्वसम्भवादित्यर्थः ॥ इति शेष इति । तथाचाधि-गताद्वैतवादिनः सङ्करादेर्नित्यदुःखस्वरूपमन्धन्तमः शिरोमणिः अलङ्कारः शिरोरत्नभूतालङ्कारः स्यादिति मूलार्थो द्रष्टव्यः । इदं नित्यनिरयरूपम् । मायावादतत्ववादयोरनारम्भणीयत्वारम्भणीयत्वयोर्विवरणम् ।

**(सत्य.टि.)** 'अज्ञानमपि अज्ञानान्तरकल्पितम्' इतिमतानुसारेण शङ्कते नन्विति ।

अन्यथेति । न हि यत्र आपणादौ रजतं सुघटं, तत्रत्यं रजतम् आरोपितम् इति व्यवहरन्ति; किन्तु यत्र शुक्तिकायां दुर्घटम्, तत्रैव रजतम् आरोपितम् इति व्यवहरन्ति; इति सुघटत्वम् आरोपितत्वविरोधि इति भावः ।

अनुपपत्तिर्वेति । दूषणस्य भूषणत्वानङ्गी(त्वाङ्गी)कारे 'अज्ञताऽखिल-सवेत्तुः' इत्यादिनोक्तदूषणं वा परिहर्तव्यम्, आत्मनोऽज्ञानं वा त्याज्यम् इत्यर्थः ।

ननु आत्मस्वरूपस्य आनन्दादेः इदानींतनप्रतिभासाभावोपपादनार्थं सर्वज्ञस्यापि अविद्या कल्प्यते इत्यत आह यथास्वरूपमिति । तर्हि सर्वज्ञस्य न अज्ञानं कल्पनीयम्, किन्नाम 'सर्वज्ञ एव अज्ञानम्' इति कल्पनीयम्; इति भावः ।

(टी.) 'वेदवेदान्तयोर्जीवब्रह्मणोरेकत्वे तात्पर्यं' इत्यङ्गीकारे अधिकार्याद्यनुपपत्त्या अनारम्भणीयत्वं स्यात् । भेदपक्षे तु अधिकार्यादिसम्भवात् आरम्भणीयत्वोपपत्तिरिति विषयान्तरे इत्यनेनोक्तम् । तद्विवृणोति

मूलम्—

अतः परो मात्रयेति पूर्वश्रुतिनिदर्शितः ॥ १७ ॥
अन्यमीशमितिश्रुत्या भिन्नजीवदृशं गतः ।
भिन्नत्वेनात्मसादृश्यदो यदेतिश्रुतेः सदा ॥ १८ ॥

अत इति अद्वैतपक्षे अधिकार्याद्यसम्भवं परामृशति । अत्र आद्यार्धश्लोकेन परमेश्वरः शास्त्रस्य विषयो दर्शितः । स च ईश्वरपदादेव विदित इति कथं शास्त्रस्य विषयः स्यात्? इत्यत उक्तं परो मात्रयेति । ईश्वरसत्तामात्रस्य कथञ्चित् अधिगतत्वेऽपि तस्य अपरिमित गुणाकरतया श्रुतिनिदर्शितस्य तथा अनवगमात् सामान्यतो विशेषतश्च तदवगमार्थं शास्त्रमिति । द्वितीयार्धेन अधिकारी दर्शितः । स च परमात्मात्मकश्चेत् सर्वज्ञतया नाधिकारी स्यादिति श्रुत्या भिन्नत्वेन समर्थितः । यद्यपि अद्वैतपक्षे अधिकार्याद्यसम्भवस्योक्तत्वात् भिन्न एवाधिकारी सिद्धः, तथापि प्राक् 'प्रत्यक्षादिसिद्धो भेदः' इत्युक्तं, तत्र प्रत्यक्षानुमाने दर्शिते, आगमप्रदर्शनायेदं श्रुत्युदाहरणम् । भिन्नत्वेन इत्यनेन प्रयोजनं दर्शितम् । तत्र भिन्नत्वेन इति

**स्वरूपसङ्कीर्तनम् । सादृश्योक्त्या भेदस्य लब्धत्वात् । सदा इति सादृश्यविशेषणम् । प्रयोजने विप्रतिपत्तेः 'यदा पश्यः' इति श्रुतिरुदाहृता । जीवद्दृशं गतः इत्यनेन अधिकारि-विषययोः सम्बन्धो दर्शितः । दृशं शास्त्रसाध्यामिति शेषः । तेन शास्त्रेण अधिकार्यादेः । सादृश्यदः इत्यनेन विषय-प्रयोजनयोः । तत्रापि शास्त्रस्येति शेषः । तेन अधिकारि-प्रयोजनयोरपीति । विषयाद्युपपन्नमिति वाक्य शेषः । तेन अत इत्यस्य सम्बन्धः । एवमद्वैतमते शास्त्रस्यानारम्भणीयत्व-प्रसङ्गान्नाद्वैतमतं सम्भवतीति युक्तमेव नारायणस्यागण्यगुण-वत्त्वमुपपादितम् ।**

**(मं.टि.)** ।। विषयान्तरे इत्यनेनैव स्वमते विषयादेः समर्थितत्वादुत्तर-ग्रन्थवैयर्थ्यमित्याशङ्क्य तद्विवरणरूपत्वान्न वैयर्थ्यमित्याह ।। भेदेत्यादिना ।। 'अतः परो मात्रया' इति मूलग्रन्थे पूर्वशब्द आदिपर्यायः ।। तथाऽ-नवगमादिति ।। लोकत इति शेषः । ननु सामान्याकारेण ज्ञातत्वादेव न विषयत्वम् । विशेषाकारस्य च अत्यन्ताप्रसिद्धत्वादेव न विषयत्वमिति विषयोऽनुक्त एव स्यादिति चेन्न । जिज्ञासाविषयो हि द्विविधः । धर्मी प्रकारश्चेति । तत्र प्रकारप्रसिद्धेरहेतुत्वेऽपि धर्मिप्रसिद्धेरेव स्वजिज्ञासा-हेतुत्वात् । अत्र च सकलकल्याणगुणत्वादीनां प्रकाराणामसिद्धत्वेऽपि नारायणो धर्मी प्रसिद्ध इति जिज्ञासोचितैव । अन्यथा तवापि प्रश्नो न स्यादित्यलम् ।। सामान्यत इति ।। अगण्यगुणाश्रयत्वेनेत्यर्थः ।। विशेषत इति ।। अगण्यगुणा आनन्दादय इति प्रतिपादनेनेत्यथः ।। द्वितीयार्धेनेति ।। विषयविशेषकथनेन अधिकार्यपि सूचित इत्यर्थः ।। प्रत्यक्षादिसिद्धो भेद इति ।। प्रत्यक्षेण सत्यतया भेदः सिद्ध इत्यर्थः । प्रत्यक्षेण सत्यतया भेदसिद्धिश्च भेदग्राहिप्रत्यक्षे बाधाभावात् ।

## भेदग्राहिप्रत्यक्षे बाधाभावाक्षेपः

ननु किमत्र स्वबाधाभावो हेतुः? किं वा अन्यबाधाभाव ? बाधमात्राभावो वा ? नाद्यः प्रसिद्ध्यप्रसिद्धिभ्यां तदभावस्य दुर्ज्ञानत्वात् । न द्वितीयः रज्जुसर्पभ्रान्तिबाधरहितशुक्तिरजतज्ञाने व्यभिचारात् । न तृतीयः प्रामाणिकाप्रामाणिकयोः सामान्यस्याप्यसम्भवात् । किं च किमेतत्कालीय-बाधाभावो हेतुः? किं वा सार्वकालिकबाधाभावः? नाद्यः तात्कालिक-बाधाभावस्य शुक्तिरजतादिज्ञानेऽपि सम्भवात् । न द्वितीयः कालान्तर-भाविबाधकाभावस्य वर्तमानमात्रग्राहिणा प्रत्यक्षेण निश्चेतुमशक्यत्वात् । अपि च यत्किञ्चित्पुरुषबाधाभावो भ्रमेऽपि सुलभः । सर्वपुरुषबाधाभावस्तु प्रकृतेऽपि दुर्ज्ञान इति ।

## भेदग्राहिप्रत्यक्षे बाधभावोपपादनम्

अत्रोच्यते, स्वबाधराहित्यं हेतुः । तत्र यदुक्तं 'तत्प्रसिद्ध्यप्रसिद्धिभ्यां तदभावस्य दुर्ज्ञानत्वादिति' तत्रोत्तरं दत्तमेव अनादित्वनिर्वचनसमये, अत्यन्ताभावस्य प्रतियोगिसत्वानपेक्षत्वादिति ।

## अत्यन्ताभावस्य निष्प्रतियोगिकत्ववादिनामाशयनिरूपणम्

ननु कथमभावो निष्प्रतियोगिकः स्यात्? इति चेन्न । किमिदं निष्प्रति-योगिकत्वम् ? प्रतियोगिप्रतीतिनिरपेक्षत्वं वा? प्रामाणिकप्रतियोगिहीनत्वं वा? नाद्यः अनुक्तोपालम्भात् । न ह्यस्माभिरत्यन्ताभावस्य प्रतीतिः प्रतियोगिप्रतीतिनिरपेक्षेत्युक्तम् । किं तर्हि? 'प्रसक्तप्रतिषेधः' इत्युक्तम् ।

## अत्यन्ताभावस्य प्रतियोगिसत्वानपेक्षत्वे अनुमानप्रमाणोदाहरणम्

न द्वितीयः 'अभावत्वं निष्प्रतियोगिकनिष्ठं सत्तासाक्षाद्व्याप्यधर्मत्वात् भावत्ववत्' इत्यनुमानेन निष्प्रतियोगिकत्वसाधनात् ।

## अत्यन्ताभावस्य सत्प्रतियोगिकत्वानङ्गीकारे अनुपपत्तिशङ्का

अथ भूतलान्तरे घटे विद्यमान एव 'एतद्भूतले घटो नास्ति' इति घटाभावोऽनुभूयते । न चायं प्रागभावप्रध्वंसाभावयोरन्यतरः । प्रतियोग्यसमानकालीनत्वात् तयोः । नाप्यन्योन्याभावः । 'भूतलं घटो न भवति' इति प्रतीतिप्रसङ्गात् । ततः परिशेषात् अत्यन्ताभाव इति गम्यते । ततश्च अत्यन्ताभावः कथं निष्प्रतियोगिकः स्यात्? इति चेन्न ।

## अत्यन्ताभावस्य सत्प्रतियोगिकत्वनिरासः

'इह भूतले घटो नास्ति' इत्यादौ भूतलघटसंसर्गस्यैव निषिद्ध्यमानत्वात् । अवश्यं चैतत् त्वयाप्यङ्गीकरणीयम् । घटस्य भूतलान्तरे सत्वेन स्वरूपेण निषेधासम्भवात् । संसृष्टत्वाकारेण निषिद्ध्यते घट इति चेत् तर्हि प्राप्ताप्राप्तविवेकेन संसर्ग एव निषिद्ध्यत इत्यायातम् । 'सविशेषणे विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामते' इति न्यायात् । कथं तर्हि घटशब्दोपादानम्? इति चेन्न । 'भूतले' इत्यधिकरणसप्तम्या भूतलस्याश्रवत्वेऽभिहिते आश्रयत्वप्रतिसम्बन्धिनि आधेयत्वे च अर्थादुक्ते 'किंनिष्ठा आधेयता ?' इत्याकाङ्क्षायां 'घटनिष्ठा' इति ज्ञापयितुं घटशब्दोपादानात् । एवं च 'इह भूतले घटो नास्ति' इत्यत्रापि भूतलघटयोराधाराधेयभावो निषिद्ध्यत इति स्थितम् । तत्र यदि नाम तयोराधाराधेयभावः प्रागभूत् तदा अयमनुभवस्तत्प्रध्वंसविषयकः । यदि भविष्यति तदा तत्प्रागभावविषयकः । यदि न जातः नास्ति न भविष्यति तदा अत्यन्ताभावविषयकः । एवं च 'शशविषाणं नास्ति' इत्यादेः 'शशे विषाणं नास्ति' इत्याद्यर्थोऽपि न कल्पनीयः । तत्राप्यप्रामाणिकस्य शशविषाणस्यैव प्रतियोगित्वोपपत्तेः । तस्मादत्यन्ताभावस्य निष्प्रतियोगिकत्वात् स्वबाधात्यन्ताभावो हेतुरिति न कश्चिद्दोषः ।

## भेदप्रत्यक्षे त्रैकालिकबाधाभावस्य प्रत्यक्षवेद्यत्वसमर्थनम्

यच्चोक्तं 'किमेतत्कालीनबाधाभावः? इत्यादि' तत्र त्रैकालिकबाधाभावो हेतुरिति वदामः । न च तदनिश्चयः । प्रत्यक्षेणैव तन्निश्चयात् । तथा हि

भावि तद्बाधकज्ञानं बाध्यज्ञानार्थशून्यताम् ।
तत्काले नैव गृह्णाति कालभेदे त्वबाधकम् ॥

कालान्तरभावि बाधकज्ञानं बाध्यज्ञानविषयाभावं गृह्णाति? न वा ? न चेत् कथं बाधकं स्यात् ? गृह्णाति चेत् बाध्यज्ञानेन यस्मिन् काले स्वविषयोऽस्तीति गृहीतस्तस्मिन्नेव काले तद्विषयं नास्तीति गृहीयात्? किं वा कालान्तरे नास्तीति ? द्वितीये तत् बाधकमेव न स्यात् । कालभेदेन तयोर्विरोधपरिहारात् । न हि घटकाले तस्यास्तित्वज्ञानं तदभावकाले तन्नास्तिताग्राहकेण बाध्यते । नाद्यः अनेन ज्ञानेन एतत्काले स्वविषयस्य प्रमितत्वेन कालान्तरभाविनापि एतत्काले एतद्विषयाभावस्य गृहीतु-मशमक्यत्वात् । कालान्तरभाविना एतद्विषयाभावग्रहणे च एतद्विरोधेन तस्यैवाप्रामाण्यनिश्चयात् ।

## भेदप्रत्यक्षे शुक्तिरजतप्रत्यक्षात् वैलक्षण्योपपादनम्

नन्वेवं तर्हि शुक्तिरजतादिज्ञानेनापि स्वविषयस्य त्रैकालिकबाधाभावो गृह्येतेति चेन्न तस्याप्रमाणत्वात् । अस्य तु प्रमाणत्वात् । प्रपञ्च-ग्राहिप्रत्यक्षस्य प्रामाण्यमेव कुतः? इति चेत् किं कुत उत्पद्यते? इति प्रश्नार्थः। किं वा कुतो ज्ञायते ? इति । उभयत्रापि स्वत एवेति परिहारः । प्रामाण्यस्वतस्त्वस्यान्यत्र निर्णीतत्वात् । नन्वयं परिहारः शुक्तिरजतज्ञानेऽपि समान इति चेन्न । संवादभावाभावाभ्यां विशेषात् ।

### संवादस्य अप्रामाण्यशङ्कानिरासकत्वे अनवस्थादोषाशङ्का तत्परिहारश्च

ननु संवादेऽपि कथं विश्वासः? इति चेत् संवादान्तरादित्यवेहि । ननु तर्ह्यनवस्था स्यात् । न स्यात् । न हि सर्वत्र संवादापेक्षा येनानवस्था । किं तु यत्र मनोवृत्तिज्ञानेषु विषयव्यभिचारः तत्रानाश्वासकारणसद्भावात् संवादापेक्षा । साक्षिज्ञाने तु न संवादापेक्षा । साक्षिणः कदापि विषय-व्यभिचाराभावात् । एवं च साक्षिविषयेषु सुखादिषु यावत्पर्यवसानं तावदेव संवादापेक्षेति नानवस्था । प्रपञ्चितं चैतत् तत्र तत्र टीकाकारैरिति ।

### भेदप्रत्यक्षे भाविबाधकनिश्चायकप्रमाणाभावः

अपि च कालान्तरे बाधकं भविष्यतीति किं निश्चीयते? किं वा संभाव्यते? नाद्यः निश्चायकप्रमाणाभावात् । अद्वैतश्रुतीनां च अन्यत्र अन्यथा व्याख्यातत्वात् ।

### भेदप्रत्यक्षे भाविबाधकसम्भावनानिरासः

न द्वितीयः सम्भावनाबीजाभावात् । ज्ञानत्वमेव सम्भावनाबीजमिति चेत् तर्हि यत् बाधकज्ञानं सम्भाव्यते तस्यापि बाधकं ज्ञानत्वात् सम्भाव्यताम् । किं चैतादृशश्रद्धाजाड्यवता कालान्तरं भविष्यतीति कथं निरणायि? येन तत्र बाधकं सम्भाव्येत ।

### भेदप्रत्यक्षप्रामाण्यनिरासार्थमुक्तानां दोषाणां तद्बाधकतयोक्तवचनेष्वतिदेशः

किं च त्वदुक्तबाधकवचनानि प्रमाणानि? न वा? द्वितीये फलित-मस्मन्मनोरथद्रुमेण । आद्ये कथं प्रामाण्यं निरणायि? अबाधादिति चेत् त्वदुक्तानि बाधकानि त्वमेवानुसन्धत्स्वेत्यलं दुर्बलहिंसया । तस्मात् प्रत्यक्षादिसिद्धो भेदः इति साधूक्तम् ।

## भेदप्रत्यक्षस्य व्यावहारिकभेदपरत्वे किं प्रमाणमिति प्रश्नायोग इति खण्डनोक्ताक्षेपः

इदं श्रुत्युदाहरणमिति ॥ नन्वत्र भेदप्रतिपादिका श्रुतिः व्यावहारिक-भेदपरेति चेत् किमत्र प्रमाणम् ? ननुभेदश्रुतेर्व्यावहारिकभेदपरत्वे खलु प्रमाणं पृच्छ्यते । तथा च यत्र प्रमाणं पृच्छ्यते सोऽर्थः प्रतीयते ? न वा? न चेत् कथं प्रमाणप्रश्नस्यावसरः? अप्रतीतार्थे प्रमाणप्रश्नायोगात् । प्रतीयते चत् सा किं भ्रान्तिः? किं वा प्रमा? नाद्यः । भ्रान्तिसिद्धे प्रमाणं पृच्छतः तवैव भ्रान्तत्वप्रसङ्गात् । न हि भान्तिसिद्धेऽर्थे प्रमाणं कश्चिदनुन्मत्तः पृच्छति । द्वितीये न नितरां प्रमाणप्रश्नः । त्वयैव प्रमितत्वाङ्गीकारात् । प्रमायाः प्रमितत्वेऽपि प्रमाकरणं पृच्छ्यत इति चेन्न । करणं विना प्रमानुदयेन प्रमाबलादेव तत्करणस्याप्यनुमानात् । प्रमाकरणसामान्यस्य सिद्धत्वेऽपि विशेषज्ञानार्थं प्रश्न इति चेन्न । 'निर्विशेषं न सामान्यं' इति न्यायेन विशेषस्यापि सामान्यबलादेव कल्पनात् । तावतैवार्थसत्वसिद्धौ विशेषजिज्ञासाया निष्फलत्वाच्चेति कश्चित् स्वव्याघातमप्यजानानः खण्डनवादी मन्यते ।

## खण्डनोक्ताक्षेपस्य स्वव्याहत्या निरासः

तं प्रति ब्रूमः ।

सा प्रमाप्रमयोरन्या या मतिस्तव वाक्यतः ।
निश्चेष्यते तद्विशेषः कथोत्तरमिति स्थितिः ॥

'भेदश्रुतिर्व्यावहारिकभेदपरा' इति तव वाक्यात्काचित्प्रतीतिरस्माकमपि जायत एव । तत्र यदुक्तं, सा किं प्रमा? अप्रमा वा? इति । तत्र प्रश्न एव नोपपद्यते । इदानीमपि तद्विशेषस्यास्माभिरनिश्चयात् । कथायां हि प्रवृत्तायां यदि त्वया भेदश्रुतीनां व्यावहारिकभेदपरत्वे प्रमाणमभिधीयेत तदा

मूलप्रमाणसत्वात् त्वद्वाक्यं प्रमाणमिति निश्चित्य करणदोषाभावात् त्वद्वाक्यादस्माक यज्ज्ञानमुत्पन्नं तत्प्रमाणमिति निश्चीयेत। यदि तु त्वया प्रमाणं नाभिधीयते परं त्वस्माभिरेव अव्यावहारिकपरत्वे प्रमाणमभिधीयेत तदा 'भेदश्रुतिर्व्यावहारिकभेदपरा' इति त्वद्वाक्यं मूलप्रमाणाभावात् अस्मदुक्तप्रमाणविरोधाच्चाप्रमाणमिति निश्चीयेत । करणदोषसद्भावात् त्वद्वाक्यजा प्रतीतिरप्रमेति निश्चीयेत। यदि च प्रागेवान्यतरनिश्चयः स्यात्तदा तवापि कथायां प्रवृत्तिर्न स्यात् । कथाफलस्य अन्यतरनिश्चयस्य प्रागेव सिद्धत्वात्। ननूत्पन्नं ज्ञानं प्रमात्वेनाप्रमात्वेन वा सिद्ध्येत्। उभयौदासीन्यं तु कथं? इति चेत् सिद्ध्येदिति कोऽर्थः? किमुत्पद्यत इति? किं वा ज्ञायत ? इति । आद्ये इष्टापत्तिः । वस्तुगत्या तस्य प्रमात्वाप्रमात्वयोरन्यतरापन्न-त्वात्। न द्वितीयः संशयकारणसद्भावे अन्यतरकोटेर्निश्चेतुमशक्यत्वात्। न च संशयकारणमेव नास्तीति युक्तम्। वादिविप्रतिपत्तिरूपकारणसद्भावात्। वयं हि त्वद्वाक्यं मूलप्रमाणरहितमिति मन्यामहे । भवांस्तु मूलप्रमाण-सहितमिति मन्यते । ततः कथं विप्रतिपत्त्यभावः? विप्रतिपत्त्यभावे च कथारम्भ एव न स्यादिति यत्किञ्चिदेतत् । स्वव्याघातस्तु स्पष्ट एव । तस्माद्युक्तः प्रमाणप्रश्नः ।

अथ प्रमाणप्रश्नमङ्गीकृत्य प्रमाणं ब्रूषे अद्वैतवाक्यविरोधादिकं, तत्रोत्तर-मन्यत्रोक्तमिति।

किं चेदं व्यावहारिकत्वं नाम? किं बाध्यत्वम् ? किं वा प्राति-भासिकान्यत्वे सति बाध्यत्वम्? यद्वा पारमार्थिकान्यत्वे सति प्रातिभासिका-न्यत्वम्? अथ वा ब्रह्मापरोक्षज्ञानातिरिक्तज्ञानाबाध्यत्वम् ? आहोस्वित् ब्रह्मापरोक्षज्ञानातिरिक्तज्ञानाबाध्यत्वे सति बाध्यत्वम् ? उत व्यवहार-निर्वाहकत्वम्? नाद्यः प्रातिभासिकेऽतिव्याप्तेः । अत एव न द्वितीयः प्रातिभासिकस्यापि यत्किञ्चित्प्रातिभासिकान्यत्वेनातिव्याप्तेः । अत एव न

तृतीयः प्रातिभासिकस्य पारमार्थिकान्यस्य यत्किञ्चित्प्रातिभासिकान्यत्वात् । प्रातिभासिकत्वस्यापि व्यावहारिकज्ञानाधीनत्वेन अन्योन्याश्रयत् । अत्यन्तं विमर्शे व्यावहारिकत्वमनिरूप्य प्रातिभासिकत्वस्य निरूपयितुमशक्यत्वात् । न चतुर्थः ब्रह्मण्यतिव्याप्तेः । तस्यापि ब्रह्मापरोक्षज्ञानातिरिक्तज्ञाना-बाध्यत्वात् । न पञ्चमः प्रारब्धकर्मण्यव्याप्तेः । तस्य ब्रह्मापरोक्षज्ञानानन्तर-मप्यनुवर्तमानस्य ब्रह्मापरोक्षज्ञानाबाध्यत्वायोगात् । किञ्च अस्मिन्नेव लक्षणेऽव्याप्तिः । स्वस्य स्वस्मिन्नवृत्तेः । न हि त्वया अस्माभिरिव लक्षणे लक्षणमङ्गीकृतम् । येन सत्यत्वादिलक्षणेष्विव विवक्षितव्यक्तिविशेषे पर्यवसानेन आत्माश्रयः परिह्रियेत । षष्ठस्तु अस्माभिः प्रार्थनीय एवेति व्यावहारिकत्वं दुर्निरूपमिति ।

॥ स्वरूपसङ्कीर्तनमिति ॥ स्वप्रयोजनशरीरानन्तर्भावादिति भावः । ननु 'यदेति श्रुतौ परमं साम्यमुपैतीति साम्यमेवोच्यते न भेदः' इत्यत आह ॥ सादृश्येति ॥ सदेति सादृश्यविशेषणमिति ॥ अभिव्यक्तानन्दत्वादिना सादृश्यस्य सदातनत्वं प्रध्वंसाप्रतियोगित्वम् । न तु त्रिकालवृत्तित्वम् । तथात्वे तस्य कृतिसाध्यत्वायोगात् ॥ अधिकारिविषययोः सम्बन्धो विषयेण ज्ञाप्यज्ञापकभावः सम्बन्धो दर्शित इत्यर्थ ॥ सादृश्यद इति ॥ विषय-प्रयोजनयोः दण्डदेयभावः सम्बन्धो दर्शित इति ॥ ज्ञातृज्ञेयभावः सम्बन्धः ॥ तेनेति ॥ शास्त्रस्याधिकारिणा ज्ञातृज्ञापकभावः सम्बन्धो दर्शित इत्यर्थः ॥ तेनाधिकारीति ॥ भोक्तृभोज्यभावलक्षणः सम्बन्धो दर्शित इत्यर्थः ॥ तेनात इति ॥ तेन अध्याहृतेन विषयाद्युपपन्नमित्यनेनेत्यर्थः ।

**(श्री.टि.)** आरम्भणीयत्वोपपत्तिः । वेदवेदान्तयोरिति वर्तते ॥ तद्विवृणोतीति । विषयान्तर इति समान्यतः प्रतिज्ञातं तदनुपपत्तिपरिहाराय श्रुत्युदाहरणपूर्वकं विवृणोतीत्यर्थः ॥ आद्यार्धश्लोकेनेति । श्लोकस्याद्यार्धः । आद्यार्धश्लोकः । तेनेत्यर्थः । आद्यार्धेनेत्यपिक्वचित्पाठः ॥ ईश्वरपदादेवेति ।

लोक एवाविपालगोपालाङ्गनं विदित इत्यर्थः ।। कथमिति । अज्ञातत्वा-भावादिति भावः । अप्राप्ते शास्त्रमर्थवदिति न्यायादिति द्रष्टव्यम् ।। परो मात्रयेतीति । परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति इति श्रुतेरयमर्थः । तन्वा शरीरेणैव न तु कीर्तिमात्रेण वावृधान ववृधान हे विष्णो त्वं मात्रया गुणानां परिमितेः सकाशात्परोऽतीतोसि अपरिमितगुणोसीत्यर्थः। एतादृशयस्य ते महित्वं केपि नाश्नुवन्तीति । मूले इति पूर्वश्रुतीत्यत्र पूर्वशब्द आदिशब्दार्थकः । तेन गुणाः श्रुतास्सुविरुद्धाश्च देवे संत्यश्रुता अपि नैवात्र शङ्का इत्यादिग्रहणम् । कथमनेन शङ्कापरिहार इत्यत आह ।। ईश्वरसत्तेति । ईश्वरस्वरूपसद्भावमात्रस्येत्यर्थः ।। अधिगत्वेपीति । ईश्वरपदादेव लौकिकैरिति शेषः । अतीन्द्रिये तस्मिन्नुपदेशाद्यसम्भवेन व्युत्पत्त्ययोगात् ईश्वरपदादपि तदधिगतिर्न सम्भवतीत्याशयेन कथञ्चिदित्युक्तम् । तस्येश्वरस्य ।। अपरिमितेति । अगणितेत्यर्थः । आकरः खनिः आश्रय इति यावत् ।। श्रुति-निदर्शितस्येति । श्रुतिप्रदर्शितस्य श्रुतिप्रतिपाद्यस्येति यावत् ।। तथेति । ईश्वरपदेन लौकिकैरगण्यगुणाश्रयत्वानवगमादित्यर्थः । एवं सति अगण्य-गुणाश्रयत्वेनेश्वरस्याज्ञातत्वाच्छास्त्रस्य विषयो भवतीत्याह ।। सामान्यत इति । ईश्वरोऽगण्यगुणाश्रयः इति सामान्यतो ज्ञानानंदशक्त्याद्यगण्यगुणवानिति विशेषतश्चेत्यर्थः । तदधिगमार्थं अगण्यगुणाश्रयत्वज्ञापनार्थम् ।। द्वितीयार्धेनेति । भिन्नजीवदृशं गत इति विशेषणकथनेनाधिकारी दर्शित इत्यर्थः ।। नाधिकारी स्यादिति । अज्ञ एवाधिकारीति भावः । स्यादित्य-नन्तरमत उक्तमन्यमीशमिति शेषः । तदभिप्रायमाह ।। श्रुत्याभिन्नत्वेनेति । अन्यमीशमिति श्रुत्युदाहरणेन जीवाद्भिन्नत्वेनेश्वरः समर्थितः । तथा च जीवस्य परमात्मात्मकत्वाभावेनाज्ञत्वसम्भवादधिकारी भविष्यत्वेत्यर्थः । तथा च जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति श्रुत्या भिन्नत्वेनावगतो यो जीवस्तस्य दृशं शास्त्रसाध्यामिति शेषः । गतः प्राप्तः विषयीभूत इति मूलार्थो द्रष्टव्यः ।

जुष्टं जुषी प्रीतिसेवनयोः सर्वसेव्यम् । अन्यं जीवाद्भिन्नम् । ईशं भगवन्तम् । अस्य महिमानं माहात्म्यं तदेतत्सत्यमिति पूर्वोक्तप्रकारेण यदा पश्यति तदा वीतशोको मुक्तो भवतीत्यर्थः ।। भिन्न एवेति । तथा च स च परमात्मात्मकश्च सर्वज्ञतया नाधिकारी स्यादिति शङ्काया एवाभावेनान्य-मीशमिति श्रुत्युदाहरणं व्यर्थमिति भावः ।। इत्युक्तमिति । आत्मस्वभाव-भेदस्य विदोषत्वेन चेत्यत्र चशब्देन प्रामाणिकत्वस्य समुच्चितत्वेन भेदस्य प्रत्यक्षादिप्रमाणसिद्धत्वादित्यर्थः ।। दर्शिते इति । अज्ञता चेत्यादिना जीवेश्वरभेदे प्रत्यक्षानुमाने दर्शिते इत्यर्थः ।। आगमेति । अन्यमीशमिति श्रुत्या स्फुटं भेदस्योक्तत्वादित्यर्थः ।। भिन्नत्वेनेत्यनेनेति । भिन्नत्वेनात्म-सादृश्यद इति तृतीयार्थेनेत्यर्थः ।। प्रयोजनमिति । मोक्षरूपप्रयोजनमित्यर्थः । ज्ञानानन्दादिरूपभगवत्सादृश्यात्मानन्दव्यक्तेरेव मोक्षत्वादिति भावः । भिन्नत्वेनात्मसादृश्यद इत्यत्र भिन्नत्वेन घटितं यदात्मसादृश्यं तत्प्रद इत्येवं भिन्नत्वेनेत्येतत्सादृश्यरूपप्रयोजनशरीरान्तर्गतमिति प्रतीयते । अत आह ।। भिन्नत्वेनेति ।। स्वरूपसङ्कीर्तनमिति । न तु सादृश्यरूपप्रयोजन-शरीरान्तर्गतमित्यर्थः । कुत इत्यत आह ।। सादृश्योक्त्येति । सादृश्यस्य भेदव्याप्तत्वेन व्याप्योक्त्या व्यापकस्य भेदस्य लब्धत्वेन तच्छरीरान्तर्गतत्वा-भावात् धूमवत्त्वोक्त्या लब्धस्य वह्नेः धूमशरीरान्तर्गतत्वाभाववदित्यर्थः । तथा च यत्र सादृश्यं तत्र भेदः यत्र भेदाभावः तत्र सादृश्याभाव इत्येवं भिन्नत्वेनोपपाद्यमानं यदात्मसादृश्यं तत्प्रद इति मूलार्थो द्रष्टव्यः ।। सदेति सादृश्यविशेषणमिति । अभिव्यक्तानन्दत्वादिरूपमोक्षादिसादृश्यस्य सदा-तनत्वरूपं विशेषणं सदेत्यनेनोक्तमित्यर्थः ।।

प्रयोजने विप्रतिपत्तेरिति । अभिव्यक्तानन्दत्वादिसादृश्यरूपमोक्षाख्य-प्रयोजनस्वरूपे प्रमाणाभावेन एकविंशति दुःखध्वंस एव मोक्ष इति केचिदाहुः । आत्महानिरित्यन्ये । सन्ततोर्ध्वगतिरित्यन्ये । इत्येवं विप्रतिपत्तेः

स्वाभिमतमोक्षरूपप्रयोजनस्य प्रामाणिकत्वसूचनाय यदा पश्य इति श्रुतिरुदाहृतेत्यर्थः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैतीति श्रुतेरयमर्थः । पश्यतीति पश्यो जीवः । रुक्मर्णं स्वर्णवर्णं जगत्कर्तारं अत एव ब्रह्मणश्चतुर्मुखस्यापियोनिम् । ब्रह्मा वेदः स एव योनिः ज्ञप्तिकारणं यस्येति वा । ईशं समर्थम् । ईशनशीलं वा । पुरुषं पूर्णषड्गुणं पुरि शेत इति पुरुषः तमिति वा । एतादृशं भगवन्तं यदा पश्यते पश्यति । तदायं विद्वान् पुण्यपापे पुण्यमनिष्टं पापं च सर्वात्मना विधूय अत एव निरञ्जनः निर्दुष्टः सन् परमं साम्यमुपैति । दुःखाभावपरमानन्दादिरूपसाम्यं सादृश्यमुपैति प्राप्नोति । यथोक्तम् । दुःखाभावः परानन्दो लिङ्गभेदः समामतेति । मुक्तेश्वरानन्दयोः साम्यं चानुकूलतया वेदनीयत्वादिरूपमेव नापरिच्छिन्नत्वादिरूपम् । यथोक्तमनुव्याख्याने ।

अन्यानन्दादिसादृश्यमानुकूल्यादिनापरम् ।<br>
पूर्णत्वादिमहत्तेषु वैलक्षण्यं श्रुतौ श्रुतमिति ।।

अधिकारिविषययोरिति । ज्ञातृज्ञेयभावरूपसम्बन्धो दर्शित इत्यर्थः । शास्त्रेण अधिकारिविषययोः सम्बन्धस्य मूले सूचितत्वज्ञापनाय जीवदृशं गत इत्यनन्तरं शेषं पूरयति ।। शास्त्रसाध्यामिति ।। तेनेति । ईश्वरस्य जीवकर्तृक-शास्त्रसाध्यज्ञानविषयत्वकथनेनेत्यर्थः ।। अधिकार्यादेरिति । आदिपदेन विषयग्रहणम् । सम्बन्धो दर्शित इत्यनुवर्तते । तत्र शास्त्रस्याधिकारिणा पाठ्यपाठकभावरूपः सम्बन्धः। शास्त्रस्य विषयस्य च ज्ञाप्यज्ञापक-भावरूपः सम्बन्धो दर्शित इत्यर्थः ।। सादृश्यद इति । आत्मसादृश्य-प्रदत्वोक्त्या विषयप्रयोजनयोर्दातृदेयभावरूपः सम्बन्धो दर्शित इत्यर्थः । अधिकारिप्रयोजनयोस्सम्बन्धस्य मूलसूचितत्वज्ञापनाय सादृश्यद इत्यनन्तरमध्याहार्यमाह ।। जीवस्येति ।। तेनेति । जीवसादृश्यप्रदत्व-

वचनेनाधिकारिप्रयोजनयोः प्राप्यप्रापकभावरूपसम्बन्धो दर्शित इत्यर्थः । नन्वतः परो मात्रयेत्यत्र अतः अद्वैतपक्षेऽधिकार्याद्यनुपपत्तेः । परोमात्र-येत्यारभ्यात्मसादृश्यद इत्यन्तमनन्वितं प्रतीयते । अतोध्याहरति ॥ इति विषयादीति ॥ वाक्यशेष इति । सादृश्यद इत्यनन्तरमित्यादिवाक्यरूपः शेष इत्यर्थः । परोमात्रयेत्यादिसादृश्यद इत्यन्तस्य वाक्यस्य इत्यादिशेष इत्यर्थ इत्याप्याहुः । तेनेति । इति विषयाद्युपपन्नमित्यनेनात इत्यस्य सम्बध इत्यर्थः। तथा च अत अद्वैतपक्षे विषयाद्यनुपपत्तेः । अस्मन्मते तु विषयाद्युपपन्न-मित्यन्वयः । तत्प्रकारविवरणं परोमात्रयेत्यादीति द्रष्टव्यम् । अगण्य-गुणत्वमगण्यगुणवत्त्वम् ॥

## नारायणागण्यगुणवत्त्वादिनिबन्धनस्य प्रयोजनम्

**(टी.) किमस्य प्रयोजनम्? इत्यत आह**

**मूलम्—**

**मायावादतमोव्याप्तमिति तत्वदृशा जगत् ।**
**भातं सर्वज्ञसूर्येण प्रीतये श्रीपतेस्सदा ॥ १९ ॥**

**(मं.टि.)** ॥ किमस्येति ॥ नारायणस्यागण्यगुणानुसन्धानमात्रेण नारायणप्रीतेः स्वप्रयोजनस्य सिद्धत्वान्निबन्धनकरणं निष्प्रयोजनमित्या-क्षेपार्थः किंशब्दः । निबन्धनकरणेन साधूनां दुर्वाद्यूहितदुर्युक्तिनिबन्धना-ज्ञानस्य निराकरणं स्यात् । तेन चात्यन्तं श्रीपतिः प्रीणातीति परिहारार्थः ।

**(श्री.टि.)** अस्येति । नारायणस्यागण्यगुणत्वोपपादनस्येत्यर्थः । मायावादेति मूलम् । तस्यायमर्थः । यथा सूर्येणांधकारव्याप्तं जगत्तन्नाशेन प्रकाशितं भवति तथा सर्वज्ञसूर्येण सर्वज्ञाचार्यसंज्ञकसूर्येण मायावादतमसा

व्याप्तं जगत् इति पूर्वोक्तप्रकारेण तत्वदृशा तत्वज्ञानेन भातं प्रकाशितम् । न तेनान्यन्मम प्रयोजनं मन्तव्यमित्याशयेनोक्तम् । सदा श्रीपतेः प्रीतय इति ।

## ग्रन्थसमाप्तौ मङ्गलाचरणम्

**(टी.) एवं समापितप्रकरणोऽपि भगवानाचार्योऽन्तेऽपि परमेश्वरप्रणामस्तवने विधत्ते**

**मूलम्—**

**नमोऽमन्दनिजानन्दसान्द्रसुन्दरमूर्तये ।**
**इन्दिरापतये नित्यानन्दभोजनदायिने ॥ २० ॥**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितेषु*
*दशप्रकरणेषु तृतीयं उपाधिखण्डनं सम्पूर्णम्*

**(टी.) आत्मसादृश्यद इत्युक्तम् । न चायं पुरुषार्थः, इत्येतत्परिहाराय आद्यं विशेषणम् । नानन्दः स्वरूपेण पुरुषार्थः इत्यतो नित्यानन्देति विशेषणम् । भोजनं भोगः अनुभव इति यावत् ।**

**(मं.टि.)** ॥ समापितप्रकरणोऽपीति ॥ प्रकरणस्य समापितत्वात् प्रणामादेर्निर्विघ्नपरिसमाप्तिलक्षणप्रयोजनाभावेऽपि भक्तिवशात् प्रणमति अभिष्टौति चेति अपिशब्दार्थः । आनन्दस्वरूपस्य परमेश्वरस्य सादृश्येन अधिकारिणः किं प्रयोजनम्? आनन्दानुभवाभावदित्यत आह ॥ नित्यानन्देति ॥

**(श्री.टि.)** प्रकरणस्य निर्विघ्नेन परिसमाप्तत्वात्पुनः प्रणामो भक्तिवशादेवेति ज्ञापनाय समापितप्रकरणोपीत्युक्तमिति ज्ञातव्यम् ।

यद्वान्तेपीत्यन्वयः मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते आयुष्मत्पुरुषकाणि भवन्तीति वचनादित्यवगन्तव्यम् ।। प्रणामस्तवने इति । प्रधानगुणभावेनेति शेषः ।। विधत्त इति । विपूर्वो दधातिः करोत्यर्थे । तथा च करोतीत्यर्थः ।। सादृश्यद इत्युक्तमिति । भगवतः स्वात्मसादृश्यप्रदत्वोक्त्या जीवस्यात्मसादृश्यलाभः पुरुषार्थ इत्युक्तमिति भावः । न चायमिति । अयं जीवस्यात्मसादृश्यलाभो न पुरुषार्थः । वस्तुत्वादिरूपसादृश्यस्य सुखदुःखप्राप्तिहान्योरन्यतरत्वाभावादिति भावः ।। आद्यं विशेषणमिति । तथाचामन्दोऽनल्पः पूर्ण इति यावत् । निजः स्वाभाविकोऽय आनन्दः तेन सांद्रा निबिडा मूर्तिर्देहः तदुपेतायेत्येवं देहस्यानन्दात्मकत्वोक्त्या तदभिन्नस्य भगवतोप्यानन्दात्मकत्वलाभात्तस्य स्वसादृश्यप्रदत्वे जीवस्याप्यानन्दात्मकत्वं प्राप्तमिति भवत्येवात्मसादृश्य-लाभो जीवस्य पुरुषार्थ इति भावः ।। स्वरूपेणेति । अननुभूयमानतयेत्यर्थः ।

**(टी.) सदा सुरशिरोरत्नप्रभामोषिनखत्विषि ।**
**कमलाकमितुः पादयुगले रतिरस्तु मे ।।**

*इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्वप्रकाशिकाविवरणं श्रीमज्जयतीर्थभिक्षुविरचितं संपूर्णम् ।।*

**(मं.टि.)** एवं परिसमापिततत्वप्रकाशिकाव्याख्यो भगवांष्टीकाकारः एतादृशटीकाकरणस्य अन्ततो नारायणप्रीतिः प्रयोजनमिति ज्ञापयन् तत्प्रीतिं प्रार्थयते ।। सदा सुरेति ।।

हयग्रीवपदाम्भोजनखदीधितिचन्द्रिकाम् ।
मनश्चकोर संसारसन्तप्त सततं पिब ।।

*इति श्रीमत्समस्तदेवतामस्तकमणिकिरणारुणितपादारविन्दस्य अरविन्दनेत्रस्य श्रीमुख्यप्राणहृदयारविन्दराजहंसस्य सज्जनकुमुदचन्द्रस्य*

*श्रीलक्ष्मीनिवासस्य श्रीहयग्रीवस्य किङ्करेण श्रीमत्परमहंसपारिव्राजकाचार्याणां ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण श्रीलक्ष्मीनारायणतीर्थाख्यात् यतिकुलतिलकात् अधीतश्रीमध्वशास्त्रामृतेन श्रीव्यासयतिना विरचिता मन्दारमञ्जरी तत्वप्रकाशिकाव्याख्याटिप्पणी सम्पूर्णा ॥*

**(श्री.टि.)** समापितग्रन्थो भगवांष्टीकाकारोऽन्तेपि मङ्गलमाचरति ॥ सदासुरेति । कमलाकमितुः पादयुगले मे सदा रतिरासक्तिरस्त्वित्यन्वयः । कमला महालक्ष्मीः तस्याः कमितुः कमु कान्तौ कान्तिरिच्छा । तथा च कामुकस्येत्यर्थः । पत्युरिति यावत् । कामुके कमितानुक इत्यभिधानात् । कमलापतेर्दक्षिणसव्यपादयोः क्रमेणानन्दज्ञानप्रदत्वात् तदुभयप्रार्थनाय पादयुगल इत्युक्तम् । यथोक्तं बृहदारण्यकभाष्ये । सुवरिति । प्रतिष्ठति आभ्यामिति प्रतिष्ठा पादौ द्वे एते अक्षरे अक्षर इत्यत्र स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मोक्षदानेन तद्दानात्सुवरस्य पदद्वयम् । दक्षिणश्चैव सव्यश्चेति । कथंभूते पादयुगले इत्यत उक्तम् । सुरशिरोरत्नेति । सुराणां शिरांसि सुरशिरांसि सुरशिरस्सु स्थितानि रत्नानि सुरशिरोरत्नानि सुरशिरोरत्नानां प्रभा सुरशिरोरत्नप्रभा सुरशिरोरत्नप्रभां मुष्णाति मुष स्तेये तिरस्करोतीति यावत् । इति सुरशिरोरत्नप्रभामोषिणी । नखानां त्विट् नखत्विट् । त्विट्कान्तौ । सुरशिरोरत्नप्रभामोषिणी नखत्विट् यस्य तत् सुरशिरोरत्नप्रभामोषिनखत्विट् । तस्मिन् सुरशिरोरत्नप्रभामोषिनखत्विषि । त्विट् त्विषीति षकारान्तनपुंसकलिङ्गः त्विट्शब्दोयम् । सप्तमीति ज्ञातव्यम् । रतिरासक्तिर्भक्तिरिति यावदित्यशेषमतिमङ्गलम् ॥ छ ॥

यादवाचार्यहृत्पद्मगतश्रीमध्ववल्लभः ।
प्रीयतामनया ग्रन्थकृत्या व्यासो दयानिधिः ।

विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यावाड्विघ्नव्यालकुलोपमर्दगरुडो विघ्नेभपञ्चाननः ।

विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाब्धिकुंभोद्भवः विघ्नाघौघघनप्रचण्डपवनः पायात्प्रसादो गुरोः ।

*इति श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन रचिता तत्वप्रकाशिकापरपर्यायोपाधिखंडनव्याख्याविवृतिः संपूर्णा ॥ छ ॥ श्रीकृष्णार्पणमस्तु ।*

**(सत्य.टि.)** कमलाकमितुरिति । कमु कान्तौ । कर्तरि तृच् । (आपादय आर्धधातुकेवेत्युक्तत्वाण्णिङ्भावः) वलादित्वाल्लिट् ॥ एवञ्च कमलां कामयते इति कमलाकमिता, तस्य ।

सदा सुरशिरोरत्नप्रभामो(मु)षि । सुरशिरोरत्नप्रभाधिकप्रभाविशिष्टे । नखत्विषि । नखानां त्विट् यस्मिन् तत् नखत्विट्, तस्मिन् नखत्विषि । नखचन्द्रिकायुक्ते पादयुगले मे सदा रतिः अस्तु, इत्यर्थः ॥

*इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितः*

*उपाधिखण्डनपरशुः*

*समाप्तः ।*

*श्रीकृष्णार्पणमस्तु ॥*